SA-I-01

साहित्याचार्यः

प्रथमवर्षम्, प्रथमपत्रम्

मुक्तस्वाध्यायपीठम्
(Institute of Distance Education)
राष्ट्रियसंस्कृतसंस्थानम्
( मानितविश्वविद्यालयः )

# काव्यप्रकाशः

# ध्वनिनिर्णयः

2·4

SA-I-01

मुक्तस्वाध्यायपीठम्
(Institute of Distance Education)
राष्ट्रियसंस्कृतसंस्थानम्
( मानितविश्वविद्यालयः )

# काव्यप्रकाशः

साहित्याचार्यः, प्रथमवर्षम्
प्रथमपत्रम्

खण्डः

## ध्वनिनिर्णयः

**प्रधानसम्पादकः**

**प्रो॰ राधावल्लभत्रिपाठी**

कुलपतिः, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

**पाठलेखनम्**

**डा. के.पी.केशवन्**
राष्ट्रियसंस्कृतसंस्थानम्
जयपुरपरिसरः, राजस्थानम्
(१३-१७ पाठाः)

**डा. सत्यनारायणाचार्यः**
राष्ट्रियसंस्कृतविद्यापीठम्
तिरुपतिः
(१८-२० पाठाः)

**सम्पादनम्**

**आचार्यः रामानुजदेवनाथः**
प्राचार्यः, श्रीराजीवगान्धीपरिसरः, शृङ्गेरी

**प्रबन्धसम्पादकः**

**प्रो. के.बी. सुब्बारायुडुः**
कुलसचिवः
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

**पाठ्यक्रमसंयोजनम्**

**डा. रत्नमोहनझाः**
वरिष्ठसहायकाचार्यः, दूरस्थशिक्षा
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

**प्रकाशनम्**

**डा. रमाकान्तपाण्डेयः**
निदेशकः, मुक्तस्वाध्यायपीठम्
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

**पुनरीक्षणम्**

**डा. रमाकान्तपाण्डेयः**

प्रकाशनवर्षम् : 2012

प्रतयः - 1000

ISBN : 978-93-82091-30-1





प्रयुक्तकागदम् - Agro-based environment Friendly.

पृष्ठविन्यासः
**राजीवकुमारसिंहः**
राष्ट्रियसंस्कृतसंस्थानम्

मुद्रकः
**डी.वी. प्रिन्टर्स**
97-यू.बी., जवाहर नगर, दिल्ली-7

**खण्डपरिचयः**

अत्र काव्यप्रकाशस्य तृतीयखण्डे भवतः स्वागतम्। भवता द्वितीय खण्डे शब्दार्थयोः स्वरूपं सविस्तरम् अधीतम्। इदानीमयं तृतीयः खण्ड उपस्थाप्यते। अत्र ध्वनिकाव्यस्य सभेदप्रभेदं सोदाहरणं च निरूपणं वर्तते। यद्यपि काव्यलक्षणे विशेष्ययोः शब्दार्थयोः स्वरूपे ज्ञाते विशेषणानं दोषादीनां विषये जिज्ञासा भवितुं शक्नोति तथापि मम्मटेन धर्मिरूपस्य काव्यस्यैव भेदानां निरूपणं काव्यप्रकाशे पूर्वं प्रारब्धम्, यतोहि धर्मिणोज्ञाने जाते एव दोषगुणादीनां धर्माणां हेमतोपादेयते ज्ञायेते। तत्र धर्मिरूपस्य काव्यस्य प्रथमो ध्वनिरूपोभेदः सविस्तरं चतुर्थे उल्लासे निरूपितः। भवान् अस्मिन् खण्डेऽस्यैव विषये पठिष्यति। अस्मिन् तृतीये खण्डे त्रयोदशपाठाद् आरभ्य विंशं पाठं यावद् आहत्य अष्टौ पाठाः सन्ति।

तत्र त्रयोदशे पाठे मुख्यतः लक्षणामूलस्य अभिधामूलस्य च द्विविधस्य ध्वनेः भेदः प्रतिपादितः। अत्र रसादीनाम् रसवदाद्यलङ्काराद् भेदोऽपि निरूपितः। चतुर्दशे पाठे भवान् मम्मटकृतयोः कारिकयोः निरूपितं रसस्वरूपं मुख्यतो ज्ञास्यति। पञ्चदशः पाठो भवन्तं भरतमुनेः रससूत्रं तस्य भट्टलोल्लट-श्रीशङ्कुण्कभट्टनायककृतं व्याख्यानां तस्य सारं च बोधयिष्यति। षोडशे पाठे भवता भट्टलोल्लटादीनां त्रयाणां रससूत्रव्याख्याने विद्यमाने दोषः, अभिनवगुप्तसम्मतं लोकोत्तरं रसस्वरूपं च पठिष्यते। अत्र पाठे भवतेदम् अपि ज्ञातुं शक्ष्यते यद् रससूत्रे मिलितानामेषत्रयाणां रसप्रकाशकत्वं कथं भवति। सप्तदशे पाठे भवान् नवानां रसानामदाहरणानि यथासंभवं भेदान् शान्तरसविषये विशेषं स्थायिनोव्यभिचारिणो भावांश्च ज्ञातुमर्हति। अष्टादशः पाठः भावादीनाम् असंलक्ष्यक्रमभेदानां सप्तानां सोदाहरणं निरूपणं करोति। ऊनविंशात् पाठात् संलक्ष्यक्रमध्वनेः सभेदं सोदाहरणं च निरूपणं प्रारभते। ऊनविंशे भवान् एवं संलक्ष्यक्रमं ज्ञास्यति। विंशे पाठे संलक्ष्यक्रमस्यैव पदवाक्यादिव्यञ्जकमुखेन भेदः प्रदर्शितः, ध्वनेः शुद्धाः ५१ भेदा उक्ताः सङ्करसंसृष्टिभ्यां पुनः भेदे आहत्य १०४५५ ध्वनिभेदाः सूचिताश्च।

एवमयं खण्डो भवन्तं समग्रान् ध्वनिभेदान् पाठयिष्यति चतुर्थोल्लासस्य मूलग्रन्थं सव्याख्यानां बोधयिष्यति च।

—•—

## त्रयोदशः पाठः ( ध्वनिभेदः )

### पाठसंरचना



### १३.१ प्रस्तावना

अत्र काव्यप्रकाशस्य त्रयोदशे पाठे भवतः स्वागतम्। अस्य ग्रन्थस्य पूर्वपाठेषु ''तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि'' इति काव्यलक्षणं भवता पठितं खलु। काव्यस्य ध्वनिः गुणीभूतव्यङ्ग्यः चित्रम् इति च त्रिविधः विभागोऽपि भवता अधीतः। काव्यलक्षणे विशेष्यांशस्य शब्दार्थौ इत्यस्य विस्तरेण निरूपणमपि द्वितीयतृतीयोल्लासयोः भवता दृष्टम्। इदानीम् अस्मिन् पाठे ध्वनेः भेदान् सोदाहरणं भवान् पठिष्यति।

### १३.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवान्-

- पूर्वोल्लासैः सह चतुर्थोल्लासस्य सम्बन्धं ज्ञास्यति।
- ध्वनेः कति भेदाः सन्तीति ज्ञास्यति।
- तत्र अविवक्षितवाच्यस्य स्वरूपम् उदाहरणं च ज्ञास्यति।

- विवक्षितान्यपरवाच्यस्य लक्षणम् उदाहरणं च ज्ञास्यति।
- अलङ्कारतालङ्कार्यतयोः भेदमधिगमिष्यति।
- रसादिध्वनेः अलङ्कार्यताम् अधिगमिष्यति।
- रसवदादीनामलङ्कारतां ज्ञास्यति।
- ''यद्यपि शब्दार्थयोः निर्णये कृते...'' इत्यत आरभ्य ''ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते'' इत्यन्तस्य ग्रन्थांशस्य पङ्क्तिज्ञानं प्राप्स्यति।
- मूलग्रन्थे ''ध्वनि भेदान्'' इत्यर्थे ''काव्यभेदान्'' इत्यस्य प्रयोगेण मुख्यतया काव्यं नाम ध्वनिकाव्यमेव भवतीति प्रत्यभिज्ञास्यति।

## १३.३ उल्लाससङ्गतिः

मम्मटेन काव्यप्रकाशस्य प्रथमोल्लासे काव्यलक्षणं तस्य ध्वनिगुणीभूतव्यङ्ग्यचित्रनामभिः त्रयो भेदाश्च निरूपिताः। तत्र ध्वनिकाव्यमुत्तममिति समाख्यातम्। द्वितीयोल्लासे तथा तृतीयोल्लासे काव्यलक्षणान्तर्गतस्य शब्दार्थौ इति विशेष्यदलस्य विस्तरेण निरूपणं कृतम्। तत्र शब्दः वाचकः लाक्षणिकः व्यञ्जकः इति त्रिधा निरूपितः। अर्थोऽपि वाच्यः लक्ष्यः व्यङ्ग्य इति त्रिविधः। शब्दाद् अर्थस्य उपस्थितिजनको व्यापारोऽपि यथाक्रमम् अभिधालक्षणाव्यञ्जनेति त्रिविधः परिकल्पितः। वाक्याज्जायमानः तात्पर्याख्यः चतुर्थोऽपि कश्चन अर्थः अस्तीति मीमांसकेषु केषाञ्चन मतं स्वीक्रियते इत्यपि पूर्वमुपपादितम्।

अनेन प्रकारेण काव्याप्रकाशस्य प्रथमद्वितीयतृतीयोल्लासानां विषयविभाजने कश्चन क्रमः उपलक्ष्यते। स एव क्रमः आद्रियते चेत् ''तददौषौ शब्दार्थौ सगुणानवलङ्कृती पुनः क्वापि'' इति काव्यलक्षणगतस्य 'शब्दार्थौ' इति विशेष्यदलस्य निरूपणानन्तरं चतुर्थोल्लासे विशेषणपदार्थानां दोषगुणालङ्काराणां निरूपणं करणीयमासीत्। तथा न कृतम्। ध्वनिभेदानां निरूपणमेव कृतमस्तीति चतुर्थोल्लासस्य विसङ्गतिः प्रसज्यते। एतां विसङ्गतिं निराकृत्य ध्वनिभेदनिरूपणस्य सङ्गतिं ग्रन्थकारः चतुर्थोल्लासारम्भे कथयति- ''यद्यपि शब्दार्थयोः निर्णये कृते ... प्रथमं काव्यभेदामाह।'' इति।

शब्दार्थः- यद्यपि शब्दार्थयोः निर्णये कृते = शब्दानां वाचकलाक्षणिकव्ञ्जनकानाम् अर्थानां वाच्यलक्ष्यव्यङ्ग्यानां च स्वरूपप्रदर्शनेन निश्चयानन्तरम्। दोषगुणालङ्काराणां = काव्यसम्बन्धिनां दोषाणां गुणानाम् अलङ्काराणाञ्च स्वरूपं = लक्षणम्, अभिधानीयम् = अभिधातुम् अथवा कथयितुं योग्यम्, तथापि धर्मिणि = सामान्ये, समस्तानां धर्माणाम् उपस्थितिः यत्रास्ति स धर्मी विशेष्यं, तस्मिन्। प्रदर्शिते = भेदप्रभेदरूपप्रकर्षेण दर्शिते। धर्माणां = विशेषाणाम् (इह काव्यलक्षणे दोषगुणालङ्काराणां विशेषाणाम्) हेयोपादेयता = हेयता -त्याज्यता, उपादेयता-ग्राह्यता च ज्ञायते = अवगम्यते, तत्तद्धर्मिनिष्ठत्वेन ज्ञायते इत्यर्थः। सामान्यधर्मिनिष्ठतया तु सामान्यकथनेनैव ज्ञातत्वादिति। इति प्रथमं काव्यभेदानाह-इति = कारणेन, प्रथमम् = आदौ काव्यस्य भेदान् = ध्वनिगुणीभूतव्यङ्ग्यचित्ररूपान् भेदान् = प्रकारान् आह = कथयति।

अयं मूलग्रन्थांशः चतुर्थोल्लासस्य प्रारम्भे वर्तते। प्रथमोल्लासे 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति काव्यलक्षणं भवता पठितं खलु। तस्मिन् लक्षणे अंशद्वयं वर्तते। 'शब्दार्थौ तद्' इति विशेष्यांशः, 'अदोषौ सगुणावनलङ्कृती पुनः क्वापि' इति विशेषणांशश्च। द्वितीयोल्लासे तृतीयोल्लासे च 'शब्दार्थौ तद्' इति विशेष्यांशगतयोः शब्दार्थयोः विस्तरेण निरूपणं कृतमस्ति। द्वितीयोल्लासे 'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा' इति कारिकया वाचकलाक्षणिकव्यञ्जका इति काव्ये त्रयः शब्दाः कथिताः। 'वाच्यादयस्तदर्थाः

स्युः' इति कारिकाभागेन वाच्यलक्ष्यव्यङ्ग्या अर्थाश्च कथिताः। अभिधालक्षणाव्यञ्जनाख्यानां व्यापाराणामपि स्वरूपं कथितम्। एतत्सर्वं द्वितीये तृतीये चोल्लासद्वये भवता पठितम्।

इदानीं चतुर्थोल्लासे काव्यलक्षणान्तर्गतानां विशेषणपदानामेव निरूपणं करणीयमासीत्। परन्तु ग्रन्थकारः तत्र काव्यस्य भेदकथनम् आरभते। प्रकृतेन मूलग्रन्थांशेन तस्य कारणं वदति। तच्च कारणं यथा- ध्वनिकाव्यस्य गुणीभूतव्यङ्ग्यकाव्यस्य चित्रकाव्यस्य च भेदाः अवगम्यन्ते चेत् कुत्र दोषाः त्याज्याः कुत्र गुणाः अलङ्काराश्च ग्राह्याः इति बोधः अवश्यमेव जायते। यथा श्रुतिकटुत्वं दोषः शृङ्गारध्वनौ परित्याज्यः भवति। रसान्तरध्वनौ चित्रकाव्ये च न परित्याज्यः। माधुर्यादिगुणः शृङ्गारादिध्वनौ उपादेयः। रौद्रादिध्वनौ तु न उपादेयः। एवमेव रसादिध्वनौ यमाकादिः अनुपादेयः। अन्यत्र चित्रकाव्यादिषु तु उपादेयः। काव्यभेदानां ज्ञानेन दोषगुणालङ्कारादीनां ग्राह्यता त्याज्यता च अवगम्यते। अतः दोषगुणालङ्काराणां स्वरूपकथनं परित्यज्य प्रथमं काव्यस्य भेदान् निरूपयति। एवमस्य उल्लासस्य सङ्गतिः अनेन ग्रन्थांशेन सुस्पष्टा भवति। काव्यप्रकाशस्य चतुर्थोल्लासे ध्वनिकाव्यस्य भेदान् निरूपयति। पञ्चमोल्लासे गुणीभूतव्यङ्ग्यकाव्यस्य भेदान् निरूपयति। षष्ठोल्लासे च चित्रकाव्यस्य भेदान् निरूपयति। एवं त्रिषु उल्लासेषु काव्यभेदान् निरूपयति। तदनन्तरं सप्तमोल्लासादारभ्य दशमोल्लासपर्यन्तं काव्यदोषान् काव्यगुणान् काव्यालङ्कारान् च निरूपयति। अनेन प्रकारेण 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति काव्यलक्षणस्य विस्तरेण निरूपणमेव सम्पूर्णस्य ग्रन्थस्य विषयः।

काव्यप्रकाशस्य व्याख्याकारेषु अन्यतमः (एकः) 'अभिधानीयम्' इत्यस्य अभिधानाय हितम् अभिधानीयं = वक्तुं योग्यम् इत्यपि अर्थं वदति। अन्ये प्रायः सर्वे व्याख्याकाराः अभिधानीयम् इत्यस्य वक्तव्यम् इत्येव अर्थं वदन्ति।

एवमेव 'काव्यभेदान्' इत्यस्य एकः व्याख्याकारः 'ध्वनिभेदान्' इत्यर्थं वदति। काव्यस्य भेदान् इति त्रिविधं काव्यमेव निर्दिश्यते चेत् काव्यप्रभेदान् इत्येव वक्तव्यमासीत् इति तस्याभिप्रायः। काव्यस्य त्रिषु प्रकारेषु प्रथमः ध्वनिरेव प्रधानभूतः काव्यप्रकारः भवति। तेन च प्राधान्येन व्यवहाराः भवन्तीति न्यायेन काव्यमित्युक्ते ध्वनिरेव भवति। अतः काव्यभेदान् इत्यस्य ध्वनिभेदान् इत्यपि वक्तुं शक्यते। एवं ध्वनिभेदान् इत्यर्थे मूलग्रन्थे काव्यभेदान् इति प्रयोगेण मुख्यतया काव्यं नाम ध्वनिकाव्यमेव भवति। अनेन च काव्यस्य एक एव भेदो भवतीति महिमभट्टादीनां सिद्धान्तोऽपि अत्र कटाक्षितः।

---

**मूलग्रन्थः**

**''यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयं तथापि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह-''**

---

**बोधप्रश्नः**

१. मम्मटस्य काव्यलक्षणे विशेष्यांशः कः भवति?

२. मम्मटस्य काव्यलक्षणे विशेषणांशः कः भवति?

३. प्रथमं काव्यभेदान् कस्माद् आह?

४. अभिधानीयम् इत्यस्य कोऽर्थः?

५. शब्दार्थयोः निरूपणं कयोरुल्लासयोः कृतमस्ति?

६. चतुर्थोल्लासस्य विषयानुक्रमे का विसङ्गतिः ?

७. तस्याः विसङ्गतेः निवारणं कथं भवति ?

## १३.४ लक्षणामूलः अविवक्षितवाच्यः

पूर्वस्मिन् पाठभागे भवान् उल्लासस्य सङ्गतिं पठितवान्। चतुर्थोल्लासे ध्वनेः भेदाः निरूपिताः इति ज्ञातवान् च। एष च ध्वनिः लक्षणामूलध्वनिः अभिधामूलध्वनिः इति द्विविधः भवति। तयोराद्यः लक्षणामूलध्वनिः अविवक्षितवाच्यध्वनिरिति नाम्ना अपि प्रसिद्धः अस्ति। तयोः द्वितीयः अभिधामूलध्वनिः विवक्षितान्यपरवाच्यध्वनिरिति नाम्ना अपि प्रसिद्धः अस्ति। एतस्मिन् उल्लासे अनयोः ध्वनिभेदयोः प्रभेदाः सोदाहरणं निरूपिताः सन्ति। प्रकृते मूलग्रन्थांशे अविवक्षितवाच्यध्वनेः भेदद्वयं सोदाहरणं निरूपितं वर्तते। अस्य पाठ्यांशस्य अध्ययनेन भवान् अविवक्षितवाच्यध्वनेः स्वरूपं भेदौ च सोदाहरणम् अवगन्तुं समर्थो भविष्यति।

द्वितीयोल्लासे प्रतिपादितायाः लक्षणायाः प्रयोजनं व्यङ्ग्यं भवति। अत्र ध्वनौ मुख्यः अर्थः विवक्षितो न भवति। मुख्यस्य अर्थस्य बाधा च जायते। अत एवायं लक्षणामूलो ध्वनिः अविवक्षितवाच्यध्वनिरित्यपि उच्यते। लक्षणा मूलं (कारणं) यस्य ध्वनेः स लक्षणामूलध्वनिः। अविवक्षितं वाच्यं यत्र स ध्वनिः अविवक्षितवाच्यध्वनिः। अयं द्विविधः भवति। अर्थान्तरसंक्रमितवाच्यध्वनिः अत्यन्ततिरस्कृतवाच्यध्वनिरिति च।

### १३.४.१ अर्थान्तरसंक्रमितवाच्यध्वनिः

अर्थान्तरे संक्रमितं वाच्यं यत्र स ध्वनिः इत्यर्थः। अत्र संक्रमितशब्दः द्विधा व्याख्यातुं शक्यते। णिजन्तत्वेन इतच् प्रत्ययान्तत्वेन च। तत्राद्यपक्षे अर्थान्तरे संक्रान्तिं नीतं वाच्यं यत्र स ध्वनिः = अर्थान्तरसंक्रमितवाच्यध्वनिः भवति। द्वितीयपक्षस्वीकारे अर्थान्तरे संक्रान्तं वाच्यं यत्र स ध्वनिः अर्थान्तरसंक्रमितवाच्यध्वनिः भवति। अस्मिन् ध्वनौ वाच्यं प्रकृते अनुपयुक्तं भवति। अत एव अर्थान्तरे संक्रमितं वर्तते। अस्योदाहरणम्-त्वामस्मि वच्मि- ----इत्यादिश्लोको भवति। त्वामहं वच्मि = भणामि इति वक्ता श्रोतारं प्रति वदति। तदनन्तरं च विवक्षितं वस्तु कथयति। अत्र विवक्षितस्य वस्तुनः कथनेनैव श्रोतुः अर्थबोधः जायते। त्वामहं वच्मि इति अकथनेऽपि न कापि हानिः। अतः इदं पुनरुक्तं भवति। तेन चास्य वाच्यार्थस्य उपयोगः प्रकृते नास्ति। एवं त्वामस्मि वच्मि इति वाक्ये वाच्यर्थस्य अनुपयोगे लक्षणया

'वच्मि' इति शब्दार्थः उपदिशामि इति लक्ष्यार्थे संक्रान्तो भवति। वाच्यलक्ष्यार्थयोः सामान्यविशेषभावः सम्बन्धः। परप्रवर्तकं वचनम् उपदेश उच्यते। उपदेशस्य वचनविशेषत्वात् प्रतिपाद्यस्य शिक्षादानं व्यङ्ग्यं प्रयोजनम्। इति अर्थान्तरसंक्रमितस्य उदाहरणं प्रदर्शितम्।

**१३.४.२ अत्यन्ततिरस्कृतवाच्यध्वनिः**

यत्र वाच्यं केनापि प्रकारेण वाक्यार्थस्य अन्वये न प्रविशति तत्र अत्यन्ततिरस्कृतवाच्यः ध्वनिः। वाच्यार्थः अत्र अत्यन्तम् अनुपपद्यमानः भवति। तेन चासौ अत्यन्ततिरस्कृत उच्यते। यथा "उपकृतं बहु..." इत्यादिश्लोके अत्यन्ततिरस्कृतवाच्यध्वनिः अस्ति। अत्र अत्यन्तम् अपकारिणं प्रति कश्चिद् वदति "उपकृतम्" इति "शरदां शतं सुखितमास्व" इति च। एतद् वचनम् अनुपपद्यमानं भवति। अतः अत्र मुख्यस्य अर्थस्य बाधा वर्तते। वाच्यार्थलक्ष्यार्थयोः अत्र वैपरीत्यं सम्बन्धः। उपकृतम् इति वाच्यार्थः। अपकृतम् इति लक्ष्यार्थः वाच्यार्थस्य विपरीतः खलु। अत्र अपकारिणः अप्राशस्त्यम् अथवा निन्दा प्रयोजनरूपं व्यङ्ग्यं भवति। वस्तुतः त्वम् अत्यन्तम् अपकारी असि। अतः अधिककालं न जीवेः इत्येव अस्य श्लोकस्य अर्थः। वाच्यस्य प्रकृते अत्यन्तम् अनुपपद्यमानत्वाद् अयम् अत्यन्ततिरस्कृत-वाच्यध्वनिभेदः।

---

**मूलग्रन्थः**

**अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ।**

**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्॥ १ ॥**

**लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येव अविवक्षितं वाच्यं यत्र स ध्वनौ इत्युन-वादाद् ध्वनिरिति ज्ञेयः। तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम्। यथा-**

**त्वामस्मि वच्मि विदुषां समावायोऽत्र तिष्ठति।**

**आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्॥**

**अत्र वचनादि उपदेशादिरूपतया परिणमति। क्वचिदनुपपद्यमानतयात्यन्तं तिरस्कृतम्। यथा -**

**उपकृतं बहु तत्र किमुच्यते**

**सुजनता प्रथिता भवता परम्।**

**विदधदीदृशमेव सदा सखे**

**सुखितमास्व ततः शरदां शतम्॥**

**एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति।**

---

**व्याख्या**

अत्र प्रथमकारिकायाः अन्वयः एवं भवति। तद्यथा - अविवक्षितवाच्यो यः (ध्वनिः) तत्र ध्वनौ वाच्यम् अर्थान्तरे संक्रमितम् अत्यन्तं तिरस्कृतं वा भवेत्।

शब्दार्थः - अविवक्षितं वाच्यं यत्र सः (ध्वनिः) अविवक्षितवाच्यः। अत्र वाच्यस्य वाक्यार्थे अनुपयुज्यमानतया अनुपपद्यमानतया वा विवक्षा नास्ति। तेनासौ लक्षणामूलः इत्यपि उच्यते। अस्मिन् अविवक्षितवाच्ये ध्वनौ। वाच्यं = मुख्यं वस्तु, अर्थान्तरे = अन्यस्मिन् अर्थे, लक्ष्यार्थे। संक्रमितम् = परिणमितम् अथवा परिणतम्। संक्रमितम् इति शब्दस्य णिजन्तरूपेण स्वीकारे परिणमितम् इत्यर्थः। तस्यैव इतच् प्रत्ययान्तरूपेण स्वीकारे परिणतम् इति चार्थः।

अत्यन्तं तिरस्कृतम् = वाच्यार्थस्य वाक्यार्थे अत्यन्तम् अनुपपद्यमानत्वात् तिरस्कृतम्। वाशब्दस्य अत्र समुच्चयो अर्थः। अविवक्षितवाच्यध्वनौ वाच्यार्थः अर्थान्तरसंक्रमितः अत्यन्ततिरस्कृतः इति च वाच्यार्थस्य भेदेन ध्वनेः द्वौ भेदौ भवतः इति कारिकार्थः। कारिकार्थमेव सोदहारणं वृत्तिकारः स्पष्टयति 'कश्चिद् वक्ति' इत्यन्तेन मूलग्रन्थभागेन। तत्र प्रथमम् अविवक्षितवाच्यध्वनेः विषयः कुत्र भवतीत्युच्यते- 'लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येव' इति। लक्षणामूलस्य गूढस्य व्यङ्ग्यस्य प्राधान्यं यदा तदा लक्षणामूलध्वनिः भवति। अयमेव अविवक्षितवाच्यध्वनिः। व्यङ्ग्यस्य अर्थस्य प्राधान्येन ध्वनिर्भवतीति भवान् ध्वन्यालोके पठितवान् खलु। इदं च व्यङ्ग्यं वस्तु (अर्थः) गूढम् अगूढम् इति द्विविधं भवति। तस्य गूढत्वे सत्येव ध्वनिः। अगूढत्वे गुणीभूतव्यङ्ग्यम् इति पञ्चमोल्लासे भवान् पठिष्यति। अयं च गूढव्यङ्ग्यार्थः यदा लक्षणायाः प्रयोजनरूपेण प्रकाशते तत्र लक्षणामूलध्वनिः। स एव वाच्यस्य अविवक्षितत्वाद् अविवक्षितवाच्यध्वनिः इत्युच्यते।

अविवक्षितवाच्यो यः ... इत्यादिमूलकारिकायाः अन्वये अविवक्षितवाच्यो यः (ध्वनिः) इति कोष्ठके ध्वनिशब्दः प्रयुक्तः अस्ति खलु। कारिकायां प्रथमाविभक्त्या ध्वनिशब्दः न प्रयुक्तोऽस्ति। 'ध्वनौ' इति सप्तमीविभक्त्या प्रयुक्तो दृश्यते। स एव शब्दः प्रथमाविभक्त्या अनूद्यते। एतदुच्यते मूलग्रन्थे वृत्तिभागे ''अविवक्षितं वाच्यं यत्र सः 'ध्वनौ' इत्यनुवादाद् ध्वनिरिति ज्ञेय'' इति। एवं प्रथमान्तविशेष्यपदस्य ध्वनिरित्यस्य अध्याहारेण 'अविवक्षितवाच्यो यः ध्वनिः तत्र ध्वनौ वाच्यम्...' इत्यन्वयो जातः।

अविवक्षितं वाच्यं लक्षणायामपि भवति इति भवता द्वितीयोल्लासे पठितं खलु। मुख्यार्थस्य बाधायां मुख्यार्थेन सम्बद्धः रूढेः प्रयोजनाद् वा यया शब्दवृत्त्या अन्योऽर्थः लक्ष्यते सा लक्षणा इति लक्षणायाः लक्षणं भवति।

अत्र ध्वनावपि अविवक्षितं वाच्यं चेत् लक्षणायाः ध्वनेश्च को भेदः? लक्षणायां प्रयोजनं व्यञ्जनाव्यापारेण लभ्यते। तत् प्रयोजनं प्रधानं भवेदिति नियमो नास्ति। ध्वनौ तावत् लक्षणया प्रतीतं व्यङ्ग्यं वस्तु प्रधानं भवति। अत एवोच्यते मूलग्रन्थे 'लक्षणामूलगूढव्यङ्ग्य-प्राधान्ये सति' इति।

अविवक्षितवाच्यध्वनेः द्वौ भेदौ स्तः। अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृत-वाच्यश्चेति। तत्राद्यस्य स्वरूपमुदाहरणञ्च वदति मूलग्रन्थे -''तत्र च वाच्यं क्वचिदनुपयुज्य-मानत्वादर्थान्तरे परिणमितम्। यथा- त्वामस्मि वच्मि' इत्यादिः। कुत्रचिद् अविवक्षितवाच्य-ध्वनिभेदे वाच्यं वाक्यार्थे नोपयुज्यते। यथा- 'त्वांस्मि वच्मि' इत्याद्युदाहरणम्। शिष्यं प्रति कस्यचिद् विदुषः उक्तिरियम्। अत्र अस्मि इति अहमित्यर्थे अव्ययम्। त्वाम् अहं वच्मि = उपदिशामि। समवायः = सभा। तद् आत्मीयां मतिम् आस्थाय = तस्मात् सावधानीभूय। अत्र स्थितिं विधेहि = अत्र सभायाम् उपतिष्ठस्व इति पदार्थः। अत्र इयं विदुषां सभा। अत्र सावधानः तिष्ठस्व इति गुरोः शिष्यं प्रति कथनेनैव वचनरूपः अर्थः गृहीतो भवति। पुनः, तत्र त्वामहं वच्मि इति कथनस्य उपयोगो नास्ति। तस्मादत्र वच्मि इत्यस्य मुख्यार्थे बाधा भवति। अतश्च वचनेन उपदेशो लक्ष्यते। वाच्यार्थस्य लक्ष्यार्थस्य च सामान्यविशेषभावः सम्बन्धः। उपदेशस्तु वचनविशेषो भवति खलु। परप्रवर्तकं वचनमेव उपदेशः। एवमत्र वचनशब्दस्यार्थः उपदेशरूपेऽर्थे परिणमति। अनुपेक्षणीयत्वं चात्र प्रयोजनं व्यङ्ग्यं भवति। लक्षणामूलं गूढं व्यङ्ग्यमत्र प्रयोजनम् भवति। एतदेवोक्तं मूलग्रन्थे - 'अत्र वचनादिः उपदेशरूपतया परिणमति' इति। वचनादि इत्यत्र आदिपदप्रयोगेण अन्येषां पदानामपि व्यञ्जकत्वम् उक्तम्। यथा - विदुषां समवायोऽत्र तिष्ठति इत्यत्र विदुषाम् इति पदं प्रकृते अनुपयुक्तम्। समवायो नाम सभा। यत्र विद्वांसः उपतिष्ठन्ति सा एव सभा उच्यते। तर्हि पुनः विदुषां समवाय इति न वक्तव्यम्। अनुपयोगित्वात्। समवायशब्देनैव विदुषामुपस्थितिरुपलभ्यते। एवमत्र विदुषामिति शब्दः

लक्षणया असाधारणज्ञानवत्वं लक्षयति। परापमानदायित्वं गूढं व्यङ्ग्यं तत्र प्रधानं वर्तते। मतिपदमपि प्रकृष्टमतिपरम्। परापमानतः स्वरक्षणं च तत् प्रयोजनं गूढव्यङ्ग्यम्। अनेन प्रकारेण वच्मीत्यादि अनुपयुज्यमानं स्वसिद्धये परस्योपदेशादेराक्षेपं करोतीति अर्थान्तरसंक्रमित-वाच्यत्वमत्र युज्यते।

अन्त्यन्ततिरस्कृतवाच्यस्य स्वरूपम् उदाहरणञ्च मूलग्रन्थे वदति। क्वचिदनुपयुज्य-मानतया अत्यन्तं तिरस्कृतम्। यथा 'उपकृतं बहु तत्र...' इत्यादि।

अविवक्षितवाच्ये ध्वनौ कुत्रचिद् वाच्यं प्रकृते अत्यन्तम् अनुपपद्यमानतया तिरस्कृतं भवति। अस्मिन् ध्वनिप्रकारे वाच्यं सर्वथा वाक्यार्थे नान्वेति। तेन च वाच्यार्थः तिरस्कृतो भवति। वाक्यार्थे अनुपपद्यमानत्वं तिरस्कारस्य हेतुर्भवति। अस्य ध्वनिभेदस्योदाहरणम्- 'उपकृतं बहु तत्र किमुच्यते...' इत्यादिश्लोकः।

(त्वया यद्) बहु उपकृतम् तत्र किमुच्यते। भवता परं सुजनता प्रकटिता। हे सखे! ततः ईदृशमेव सदा विदधत् शरदां शतम् सुखितम् आस्व इत्यन्वयः।

अपकारिणं प्रति कस्यचिदुक्तिरियं भवति। अस्यायमर्थः। त्वया यत् बहु उपकृतं तत्र = तद्विषये किमुच्यते = किं वाच्यम्। बहुत्वाद् वक्तुं न शक्यम्। भवता परं = केवलं सुजनता प्रथिता = प्रकटिता। तथा च सौजन्ययुक्त एव एतावानुपकारो न तु प्रत्युपकारलाभाद्युपाधिप्रयुक्तः। हे सखे! ततः = यस्मात् सुजनता प्रथिता तस्माद् ईदृशमेव सदा विदधत् = कुर्वन् शरदां = वर्षाणां शतं व्याप्य सुखितं = सुखयुक्तं यथा स्यात्तथा आस्व = तिष्ठ इत्यर्थः।

अपकारिणं प्रति उपकृतं, सुखितमास्व इत्युक्तिः अत्यन्तम् अनुपन्ना वर्तते। ततश्चात्र मुख्यार्थस्य बाधा। वाच्यार्थलक्ष्यार्थयोः वैपरीत्यं सम्बन्धः। अत्र उपकारेण अपकारः, सौजन्येन दौर्जन्यम्, ईदृशविधानेन अनीदृशविधानं, सखे इत्यनेन शत्रो इति सुखितम् इत्यनेन दुःखितम् इति शरदां शतमास्व इत्यनेन क्षणमपि जीवितो न भव इत्यादिविपरीतमर्थान्तरं लक्षणया बुध्यते। यत्र गुप्तासभ्यार्थप्रतिपादनम्, आशु म्रियस्व इत्यादि व्यङ्ग्यम् वर्तते। अथवा उपकारकारिणः सर्वदा श्लाघ्याः भवन्तीति अपकारिणस्तु अत्यन्तं निन्द्याः इति च श्लोकेनानेन व्यङ्ग्यं प्रतीयते।

एवमविवक्षितवाच्यध्वनेः वाच्यम् अर्थान्तरसंक्रमितम् अत्यन्ततिरस्कृतमिति च द्विविधं भवति। अनन्तरञ्च ध्वनेः विवक्षितान्यपरवाच्य इत्यपि प्रभेदः अस्तीति तस्य भेदान् लक्षणम् उदाहरणञ्च अत्र वदति।

**बोधप्रश्नः**

१. अविवक्षितवाच्यध्वनिः कः भवति?

२. अर्थान्तरसंक्रमितवाच्यध्वनिः कः भवति?

३. संक्रमितशब्दस्य कोऽर्थः?

४. अत्यन्ततिरस्कृतवाच्यध्वनेः लक्षणम् उदाहरणञ्च स्पष्टयतु।

## १३.५ अभिधामूलध्वनिः

अविवक्षितवाच्यध्वनिः द्विविधः भवतीति भवान् पठितवान् खलु। इदानीं ध्वनेः अन्योऽपि प्रमुखो भेदः अस्तीत्युच्यते। स च विवक्षितान्यपरवाच्यः अथवा अभिधामूलः उच्यते। अस्य अभिधामूलध्वनेः अथवा विवक्षितान्यपरवाच्यध्वनेः असंलक्ष्यक्रमव्यङ्ग्यः इति संलक्ष्यक्रमव्यङ्ग्यः इति च प्रथमं द्वौ भेदौ स्तः। तत्र असंलक्ष्यक्रमव्यङ्ग्य इति रसादिध्वनेः

नाम भवति। अस्य एक एव भेदः स्वीकृतः। असंलक्ष्यक्रमव्यङ्ग्ये ध्वनौ वाच्यार्थव्यङ्ग्यार्थप्रतीत्योः मध्ये क्रमः अस्ति। तथापि सः क्रमः अत्यन्तं सूक्ष्मः। अत एव असौ न संलक्ष्यते। शतसंख्यकानि कमलदलानि एकत्रीकृत्य सूच्यग्रेण तानि छिनत्ति चेद् एकस्मिन्नेव समये सर्वेषां कमलदलानां छेदो जात इव प्रतीयते। तथैव विभावानुभावव्यभिचारिरूपस्य वाच्यार्थस्य रसादिरूपव्यङ्ग्यार्थस्य च बोधे क्रमः विद्यते चेदपि सः क्रमः न संलक्ष्यते। अतः असौ असंलक्ष्यक्रमव्यङ्ग्यध्वनिः उच्यते।

संलक्ष्यक्रमव्यङ्ग्यध्वनिश्च प्रथमम् अर्थशक्तिमूलः शब्दशक्तिमूलः उभयशक्तिमूलश्चेति त्रिविधः भवति। तत्र शब्दशक्तिमूलध्वनेः वस्तुध्वनिः अलङ्कारध्वनिरिति द्वौ प्रभेदौ स्तः। अर्थशक्तिमूलध्वनेः द्वादशप्रभेदाः सन्ति। उभयशक्तिमूलध्वनेः एक एव प्रभेदः। एवं संलक्ष्यक्रमध्वनिः पञ्चदशप्रभेदः अस्ति। एक असंलक्ष्यक्रमव्यङ्ग्यध्वनिभेदोऽपि मिलित्वा विवक्षितान्यपरवाच्यध्वनेः षोडश भेदाः।

विवक्षितम् अन्यपरं च वाच्यं यत्र सः ध्वनिः विवक्षितान्यपरवाच्यध्वनिः। अत्र व्यक्तिविवेककारः महिमभट्टः वदति- यदि वाच्यं विवक्षितं भवति तर्हि तत् कथम् अन्यपरं भवेत्। अतः अयं ध्वनिभेद एव न संभवति इति। अत्र वाच्यम् अन्यपरत्वेनैव विवक्षितं भवतीति न विरोधः। अन्यपरम् इत्यस्य व्यङ्ग्योपसर्जनीभूतम् अथवा व्यङ्ग्यनिष्ठम् इत्यर्थः।

अविवक्षितवाच्यध्वनिः लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सति भवति इति भवान् दृष्टवान्। अयं विवक्षितान्यपरवाच्यध्वनिः अभिधामूलगूढव्यङ्ग्यप्राधान्ये सति संभवति।

### १३.५.१ असंलक्ष्यक्रमव्यङ्ग्यच्ध्वनिः

अभिधामूलध्वनेः द्वयोः भेदयोः अयम् अन्यतरः अस्ति। न लक्षयितुं शक्यः क्रमः यस्य सः अलक्ष्यक्रमः। अलक्ष्यक्रमः व्यङ्ग्यः यत्र सः ध्वनिः अलक्ष्यक्रमव्यङ्ग्यध्वनिः। अलक्ष्यक्रमत्वेन च लक्षणायाः स्पर्शोऽपि नात्र विद्यते। लक्षणायां तु प्रथमं मुख्यार्थबोधः, तदनन्तरं तस्य अनुपयुज्यमानत्वेन अनुपपद्यमानत्वेन वा बाधा, तदनन्तरं लक्ष्यार्थबोधः, ततश्च प्रयोजनस्य व्यङ्ग्यस्य बोध इति सुस्पष्टः क्रमः वर्तते। अत्र तु क्रमः विद्यमानोऽपि न संलक्ष्यः इति उभयोः भेदः स्पष्टः।

अलक्ष्यक्रमः इत्यस्य विद्यमानोऽपि क्रमः सूक्ष्मतया न लक्ष्यते इत्यर्थः। तथाहि – विभावानुभावव्यभिचारिण एव रसः इति नैव सिद्धान्तः। अपि तु विभावानुभावव्यभिचारिभिः रसस्य प्रतीतिः भवति इत्येव सिद्धान्तः। तेन च प्रथमं विभावानुभावव्यभिचारिणां प्रतीतिः तदनन्तरं तैः रसप्रतीतिरिति अनयोः विभावादिरत्यादिप्रतीत्योः अस्ति क्रमः। स च क्रमः अत्यन्तं लाघवेन न लक्ष्यते इत्यलक्ष्यक्रमव्यङ्ग्यो ध्वनिरिति अभिधामूलध्वनेः प्रथमः भेदः।

### १३.५.२ संलक्ष्यक्रमव्यङ्ग्यध्वनिः

यत्र ध्वनौ वाच्यव्यङ्ग्ययोः प्रतीतौ क्रमः लक्षयितुं योग्यः भवति सः ध्वनिः लक्ष्यक्रमः भवति। लक्ष्यव्यङ्ग्यक्रमः परः इति मूलग्रन्थे पाठो वर्तते। तत्र व्यङ्ग्यस्य क्रमः व्यङ्ग्यक्रमः, लक्ष्यः व्यङ्ग्यक्रमः यत्र स ध्वनिः लक्ष्यव्यङ्ग्यक्रमः उच्यते। अयमेव संलक्ष्यक्रमव्यङ्ग्य इति अनुस्वानाभध्वनिः इति च प्रसिद्धः अस्ति। इदमेव अस्मिन्नेवोल्लासे अग्रे निरूपितं भवति।

---

**मूलग्रन्थः**

**''विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः।**

**अन्यपरं व्यङ्ग्यनिष्ठम्।''**

**एष च- कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः॥ अलक्ष्येति। न तु खलु विभावानुभावव्यभिचारिण एव रसः, अपि तु रसस्तैरित्यस्ति क्रमः। स तु लाघवान्न लक्ष्यते।''**

---

**बोधप्रश्नः**

१. 'विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः' इति कारिकाभागस्य अर्थं स्पष्टयतु।

२. अभिधामूलध्वनेः भेदद्वयं लिखतु।

३. अलक्ष्यक्रमव्यङ्ग्यध्वनिः इति शब्दस्य विग्रहमुक्त्वा अर्थं स्पष्टयतु।

४. 'न खलु विभावानुभाव्यभिचारिण एव रसः, अपि तु रसस्तैरित्यस्ति क्रमः' इति ग्रन्थांशस्य कोऽर्थः ?

## १३.६ रसादिध्वनेः अलङ्कार्यता

विवक्षितान्यपरवाच्यध्वनेः असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यः इति द्वौ भदौ स्तः इति भवता पठितम्। तयोराद्यः रसादिध्वनेः विषयः अस्तीति अस्मिन्नेव पाठे पूर्वस्मिन् भागे भवान् पठितवान्। रसादिध्वनिरित्यत्र आदिपदेन भावाः, रसाभासाः, भावाभासाः,

भावशान्तिः, भावशबलता, भावसन्धिश्च गृह्यन्ते। एते रसादयः यदा काव्ये प्रधानव्यङ्ग्यरूपाः तदा एतेषां रसादिध्वनिरिति व्यपदेशो भवति। तदानीम् एते अलङ्कार्यशब्दावाच्याः भवन्ति। अलङ्कारः अलङ्कार्यश्च भिन्नौ भवतः। येन उपमादिना काव्यम् अलङ्क्रियते स उपमादिः अलङ्कारो भवति। येनोपमादिना यः अलङ्क्रियते सः काव्यात्मा अलङ्कार्यः अथवा अलङ्करणीयः कथ्यते। रसादिः कदाचिद् अलङ्कार्यः, कदाचिद् अलङ्कारश्च भवति। कुत्र रसादिः अलङ्कार्यः इत्युच्यते। यस्मिन् काव्ये रसादिः प्रधानतया तिष्ठति तत्रासौ अलङ्कार्यः कथ्यते। अयमेव रसादिध्वनेः विषयः। यत्र रसः प्रधानः भवति, अलङ्कार्यतया स्थितः सः रसध्वनिरुच्यते। एवमेव भावध्वनिः रसाभासध्वनिः इत्यादीनां व्यवहारः। रसादेः प्राधान्येन अलङ्कार्यत्वं भवति। अलङ्काराः अलङ्कार्यस्य उपस्कारकाः भवन्ति। अतः वाक्यार्थीभूतो रसादिरेव काव्यजीवितं भवति। एवं रसादेः अलङ्कार्यता व्याख्याता।

### १३.६.१ रसवदादयोऽलङ्काराः

रसादिः असंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः विषयो भवतीति भवान् पठितवान्। इदानीम् अयमेव रसादिः अलङ्कारस्य विषयः कथं भवेद् इति पश्यामः। रसादिः यदा काव्ये प्रधानभूतव्यङ्ग्यो भवति तदा असौ ध्वनिपदवाच्यः भवति। कदाचिच्च रसादिः काव्ये अन्यस्य वाक्यार्थस्य अङ्गभूतो भवति। तदा असौ अलङ्कारपदवाच्यो भवति।

यत्र काव्ये रसादेरन्यः अर्थः प्राधानः भवति रसादिश्च अङ्गं भवति तत्र रसादिः अलङ्कार उच्यते। रसादेरलङ्कारत्वे अयम् अन्यमर्थम् अलङ्करोति।

प्राचीनाः भामहप्रभृतयः रसस्य अङ्गत्वे रसवदलङ्कारं, भावस्य अङ्गत्वे प्रायोऽलङ्कारं, रसाभासस्य अङ्गत्वे भावाभासस्य चाङ्गत्वे ऊर्जस्विदलङ्कारं, भावशान्तेरङ्गत्वे समाहितालङ्कारं च स्वीकुर्वन्ति। रसादीनामलङ्कारत्वे गुणीभूतव्यङ्ग्यस्य भेद इति पञ्चमोल्लासे वक्ष्यते।

---

**मूलग्रन्थः**

**तत्र - रसभावतदाभासभावशान्त्यादिरक्रमः।**
**भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः॥**

**आदिग्रहणाद् भावोदयभावसन्धिभावशबलत्वानि। प्रधानतया यत्र स्थितो रसादिस्तत्रा-लङ्कार्यः। यथोदाहरिष्यन्ते। अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणाभूतव्यङ्ग्ये रसवत्प्रेय ऊर्जास्वित्समाहितादयोऽलंकाराः। ते च गुणीभूतव्यङ्ग्याभिधान उदाहरिष्यन्ते।**

---

**व्याख्या**

रसभावतदाभासभावशान्त्यादिरक्रमो भवति। अक्रमः इत्यलक्ष्यक्रमः। अत्र मध्यमपद-लोपी समासः। न विद्यते क्रमः अक्रमः इति तु अत्र न सङ्गच्छते। अयम् अक्रमः रसाद्यलङ्काराद् भिन्नः भवति। रसाद्यलङ्काराद् इत्यस्य रसादीनामलङ्काराद् भिन्नः भवति। रसाद्यलङ्काराद् इत्यस्य रसादीनामलङ्काराद् इति विग्रहः युक्तः। तेन च रसालङ्कारः रसवद् भवति। भावालङ्कारः प्रेय उच्यते। रसाभासालङ्कारः भावाभासालङ्कारश्च ऊर्जस्वित्। भावशान्त्यलङ्कारः समाहितः इति सङ्गच्छते।

अत्र कारिकायाम् एकः सन्देहः भविष्यति। रसभावतदाभासभावशान्त्यादिः इति कथितं वर्तते। रसभावतदाभासशान्त्यादिः इति कुतो नोच्यते। मध्ये भावशब्दः किमर्थं पुनः कथितः ? यदि भावशब्दः पुनरपि न प्रयुक्तः तर्हि रसः, भावः, रसाभासः, भावाभासः, रसशान्तिः,

भावशान्ति, रसोदयः, भावोदयः, रससन्धिः, भावसन्धिः, रसशबलता, भावशबलता इति कारिकायाः अर्थः स्यात्। अयं नेष्टः। यतो हि रसस्य शान्तिः उदयः, सन्धिः, शबलता वा नैव भवति। परविश्रान्तिरूपो रसः। तस्य रसस्य शान्तौ रस एव शान्तो भवति। अतः रसस्य शान्त्यादयः न संभवन्ति। तस्मात् कारिकायां भावशब्दः मध्ये प्रयुक्तः। शान्त्यादयः केवलं भावस्यैव संभवन्ति न तु रसस्येति निष्कर्षः।

भावशब्देन अत्र व्यभिचारिभावाः गृह्यन्ते। न तु स्थायिभावा अपि। व्यभिचारिणामेव उदयादयो युज्यन्ते। रसादीनां यत्र अपराङ्गता तत्र गुणीभूतव्यङ्ग्यत्वं भवति। यत्र च प्राधान्यं तत्र ध्वनित्वम् अलङ्कार्यता च। ध्वन्यालोके ध्वनिकारोऽपि रसवदलङ्कारस्य लक्षणमेवं कथयति-

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥**

इति। एवं यत्र रसादिः प्रधानः तत्र ध्वनिः। यत्र तु रसादिः अप्रधानः तत्र अलङ्कार इति सिद्धान्तः।

**बोधप्रश्नः**

१. रसादेः अलङ्कार्यता कथं भवति?

२. रसादेः अलङ्कारता कथं भवति?

३. रसभावतदाभासभावशान्त्यादिः इत्यत्र भावशब्दः किमर्थं पुनरपि प्रयुक्तः?

४. अलङ्कार्यशब्दस्य अलङ्कारशब्दस्य च अर्थमुक्त्वा भेदं स्पष्टयतु।

## १३.७ सारांशः

अस्मिन् पाठे भवान् किं किम् अधीतवान्? काव्यप्रकाशस्य चतुर्थोल्लासे प्रारम्भाद् असंलक्ष्यक्रमव्यङ्ग्यध्वनेः रसवदलङ्कारस्य च भेदप्रदर्शनपर्यन्तः मूलग्रन्थांशः अस्मिन् पाठे निरूपितोऽस्ति।

तत्र प्रथमे पाठ्यांशे चतुर्थोल्लासस्य सङ्गतिं भवान् अधीतवान्। 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति काव्यलक्षणान्तर्गतस्य शब्दार्थौ इति विशेष्यांशस्य विस्तरेण प्रतिपादनं द्वितीयतृतीयोल्लसायोः कृतमस्ति। तदनन्तरं चतुर्थोल्लासे विशेषणांशानां दोषगुणालङ्काराणां निरूपणमेव करणीयमासीत्। परन्तु अत्र ध्वनिभेदानां निरूपणं क्रियते। अयं क्रमः वस्तुतः विसङ्गतिरिव प्रतीयेत। परन्तु काव्यस्य भेदाः अवगम्यन्ते चेत् दोषगुणालङ्काराणां कुत्र ग्राह्यता कुत्र त्याज्यता इति अवश्यमेव ज्ञायते। अतः काव्यभेदानां चतुर्थोल्लासाद् निरूपणं सङ्गतमेव।

काव्यभेदेषु प्रथमः ध्वनिः वर्तते। तस्य प्रथमम् अविवक्षितवाच्ध्वनिः विवक्षितान्यपर-वाच्यध्वनिः इति भेदद्वयं कथितमस्ति।

अविवक्षितं वाच्यं यत्र सः ध्वनिः अविवक्षितवाच्यध्वनिः। वाच्यस्य अनुपयुज्यमानत्वम् अनुपपद्यमानत्वं वा अविवक्षितत्वम्। तत्र वाच्यं यदा अनुपयुज्यमानं सद् अविवक्षितं भवति तदा असौ अर्थान्तरे परिणमति। असौ अविवक्षितवाच्ये ध्वनौ अर्थान्तरसंक्रमिताख्यो भेदः। 'त्वामस्मि वच्मि...' इत्यादिश्लोकः उदाहरणम्। शिष्यं प्रति गुरोः वाक्ये त्वामहं वच्मीति वचनक्रियाया अनुपयोगात् बाधिता भवति। सामान्यविशेषरूपसम्बन्धेन वचनक्रिया लक्षणया उपदेशरूपेण अर्थेन परिणतो भवति। वचनस्य अनुपेक्षणीयत्वं चात्र व्यङ्ग्यम्।

यस्मिन् ध्वनौ अनुपपद्यमानत्वेन वाच्यम् अविवक्षितं भवति स अत्यन्ततिरस्कृतवाच्यस्य ध्वनेः विषयः। ''उपकृतं बहु तत्र किमुच्यते...'' इत्यादिश्लोकः उदारहणम्। अत्र अपकारिणं प्रति उपकृतमित्याद्युच्यते।

अतः वाच्यस्य अत्यन्तम् अनुपपन्नत्वम्। वैपरीत्यसम्बन्धेन लक्षणया अपकृतम् इत्यर्थः प्रकाशते। श्रोतुः अपकारातिशयः अत्र व्यङ्ग्यः। एवम् अविवक्षितवाच्यध्वनेः भेदद्वयमपि भवान् सोदाहरणं पठितवान्।

विवक्षितान्यपरवाच्य इति ध्वनेः द्वितीयः भेदः अस्ति। अन्यपरत्वेनैव विवक्षितं वाच्यं यत्र स ध्वनिः विवक्षितान्यपरवाच्यध्वनिः। अन्यपरशब्दस्य व्यङ्ग्यनिष्ठमित्यर्थः। अस्य च ध्वनेः अलक्ष्यक्रमव्यङ्ग्यध्वनिः लक्ष्यक्रमव्यङ्ग्यध्वनिरिति द्वौ प्रभेदौ स्तः। वाच्यव्यङ्ग्ययोः क्रमे सत्यपि न संलक्ष्यते। अतः असौ अलक्ष्यक्रमव्यङ्ग्यः उच्यते। मूलकारिकायाम् अक्रमः इत्युक्तं भवति। तत्र मध्यमपदलोपिसमासं स्वीकृत्य अलक्ष्यक्रमव्यङ्ग्यध्वनिरित्युच्यते। रसादिध्वनिरसस्य विषयो भवति। रसभावाद्यनेकभेदयुक्तोऽपि अनन्तत्वादसंख्येयत्वाद् अस्य एक एव भेदः स्वीक्रियते।

रसभावतदाभासभावशान्त्यादिः यदा प्रधानतया व्यङ्ग्यो भवति तदा असौ ध्वनेः विषयः। तदानीमसौ अलङ्कार्यः अथवा अलङ्करणीय उच्यते। यदा काव्ये रसादेरन्यः वाक्यार्थः मुख्यो भवति रसादिश्च तस्य अङ्गभूतो भवति तदा तत्र रसादयः अलङ्काराः उच्यन्ते। एवं रसादिध्वनेः रसवदलङ्कारस्य च विभक्तः विषयः पाठेऽस्मिन् भवान् पठितवान्।

## १३.८ शब्दावली

| | | |
|---|---|---|
| अविवक्षितवाच्यध्वनिः | - | न विवक्षितम् अविवक्षितम्। अविवक्षितं वाच्यं यस्मिन् सः ध्वनिः = अविवक्षितवाच्यध्वनिः। |
| विवक्षितान्यपरवाच्यध्वनिः | - | विवक्षितं च अन्यपरं च विवक्षितान्यपरम्। विवक्षितान्यपरं वाच्यं यस्मिन् सः ध्वनिः = विवक्षितान्यपरवच्यध्वनिः। अन्यपरं = व्यङ्ग्यनिष्ठम्। |
| रसाद्यलङ्कारात् | - | रसादीनाम् अलङ्कारात् |
| असंलक्ष्यक्रमः | - | न संलक्ष्यः क्रमः यत्र सः असंलक्ष्यक्रमः। |

## १३.९ सन्दर्भग्रन्थः


१. काव्यप्रकाशः - संकेतव्याख्यासहितः - आनन्दाश्रमप्रकाशनं १९२१ ई.

२. काव्यप्रकाशः - झलकीकरवामनः -भण्डारकर इन्स्टिट्यूट पूणे १९६५ ई.

३. काव्यप्रकाशः - आदर्शव्याख्यासहितः - परिमलप्रकाशनम् देहली १९८५ ई.

४. काव्यप्रकाशः - साहित्यचूडामणिः -सुधासागरसाहितः-काशी हिन्दूविश्वविद्यालयः-वाराणसी १९८१ ई.

५. काव्यप्रकाशः - नागेश्वरी टीकासहितः- चौखम्बासंस्कृतसंस्थानम् नवमसंस्करणम्-२००० ई.

## १३.१० सहायकग्रन्थः

१. व्यक्तिविवेकः - महिमभट्टः

२. नाट्यशास्त्रम् - भरतमुनिः

३. ध्वन्यालोकः - आनन्दवर्धनः

## १३.११बोधप्रश्नोत्तराणि

(१३.३)

१. मम्मटस्य काव्यलक्षणे शब्दार्थौ इति विशेष्यांशो भवति।

२. मम्मटस्य काव्यलक्षणे अदोषौ, सगुणौ, अनलङ्कृती पुनः क्वापि इति विशेषणांशो भवति।

३. धर्म्मिणि काव्ये प्रदर्शिते धर्म्माणां दोषगुणालङ्काराणां हेयोपादेयता ज्ञाता भविष्यति। अतः प्रथमं काव्यभेदान् आह।

४. अभिधानाय हितम् अभिधानीयम्। वक्तुं योग्यम् इत्यर्थः।

५. शब्दार्थयोः निरूपणं द्वितीयतृतीययोरुल्लासयोः कृतमस्ति।

६. काव्यलक्षणान्तर्गतयोः शब्दार्थयोः निरूपणं द्वितीयतृतीययोः उल्लासयोः कृतमस्ति। चतुर्थोल्लासे तस्यैव विशेषणानां निरूपणं करणीयमासीत्। परमत्र काव्यभेदनिरूपणं कृतमस्तीति विसङ्गतिः।

७. काव्यभेदानाम् अवगमनेन दोषगुणालङ्काराः कुत्र ग्राह्याः कुत्र त्याज्याः इति ज्ञायते। अतः दोषगुणालङ्काराणां निरूपणात् पूर्वं काव्यभेदानां निरूपणं सङ्गतं भवति।

(१३.४)

१. यत्र ध्वनौ वाच्यम् अविवक्षितं भवति स अविवक्षितवाच्यध्वनिः। अयं लक्षणामूलध्वनिरित्यपि प्रसिद्धो भवति।

२. यत्र ध्वनौ वाच्यम् अनुपयुज्यमानत्वेन अविवक्षितं सत् अर्थान्तरे संक्रमितं भवति सः अर्थान्तरसंक्रमितवाच्यध्वनिः।

३. संक्रमितशब्दे णिच् प्रत्ययस्वीकारेण परिणमितमर्थः। इतच् प्रत्ययस्वीकारेण परिणतमर्थः।

४. यस्मिन् ध्वनौ वाच्यम् अत्यन्तं तिरस्कृतं भवति सः अत्यन्ततिरस्कृतवाच्य-ध्वनिः।

उपकृतं बहु तत्र किमुच्यते<br>
सुजनता प्रथिता भवता परम्।<br>
विदधदीदृशमेव सदा सखे<br>
सुखितमास्व ततः शरदां शतम्॥

इति उदाहरणम्। अपकारिणं प्रति कस्यचिदुक्तिरियम्। उपकृतम् इत्यादीनां शब्दानां वाच्यस्यार्थस्य प्रकृते अनुपयोगित्वम्। अतः वैपरीत्यसम्बन्धेन अपकृतम् इत्यादयः अर्थाः लक्षणया लभ्यन्ते। अपकारातिशयश्च व्यङ्ग्यं भवति। एवमेव सुखितमास्व इत्यादीनामपि अत्यन्ततिरस्कृतत्वं वर्तते।

( १३.५ )

१. यत्र वाच्यं विवक्षितम् अन्यपरं च भवति स तु अपरः (ध्वनिः) इत्यन्वयः। यस्मिन् ध्वनौ वाच्यम् अन्यपरत्वेन = व्यङ्ग्योपसर्जनीभूतत्वेन व्यङ्ग्यनिष्ठत्वेन वा विवक्षितं भवति सः अविवक्षितवाच्याद् अपरः ध्वनिः भवति।

२. अलक्ष्यक्रमव्यङ्ग्यध्वनिः लक्ष्यक्रमव्यङ्ग्यध्वनिः इति अभिधामूलध्वनेः भेदद्वयं भवति।

३. लक्षयितुं शक्यः लक्ष्यः। न लक्ष्यः क्रमः यस्य सः = अलक्ष्यक्रमः। अलक्ष्यक्रमः व्यङ्ग्यः यस्मिन् स ध्वनिः अलक्ष्यक्रमव्यङ्ग्यध्वनिः इति विग्रहः। यस्मिन् ध्वनिकाव्ये वाच्यार्थव्यङ्ग्यार्थयोः बोधे क्रमः विद्यमानोऽपि अत्यन्तं लाघवेन न लक्ष्यते सः अलक्ष्यक्रमव्यङ्ग्यध्वनिः भवति।

४. रसध्वनिः अलक्ष्यक्रमव्यङ्ग्यध्वनेः विषयः अस्ति। रसश्च विभावानुभाव-व्यभिचारिसंयोगात् निष्पद्यते। यद्यपि विभावादिप्रतीतिः रसप्रतीतिश्च सहभावेन इव जायते तथापि अनयोः प्रतीत्योः मध्ये कश्चन क्रमः अवश्यं वर्तते। स तु क्रमः अत्यन्तं लाघवेन न लक्ष्यते। एवं रसः विभावानुभाव्यभि-चारिभिः निष्पद्यते। न तु विभावादय एव रसः इति सिद्धान्तः। अत एवोक्तं ग्रन्थे ''न खलु विभावानुभावव्यभिचारिण एव रसः, अपि तु रसस्तैरित्यस्ति क्रमः'' इति।

( १३.६ )

१. काव्ये रसादेः अङ्गित्वम् अन्येषां च तदङ्गत्वं तदा रसादेरलङ्कार्यत्वम् उच्यते। अत्र रसादिः अलङ्करणीयो भवति। उपमादयः तमलङ्कुर्वन्ति।

२. काव्ये रसादिः यदा प्रधानभूतम् अर्थान्तरम् अलङ्करोति तदा रसादिरलङ्कारो भवति।

३. यदि भावशब्दः अत्र पुनरपि न प्रयुज्यते तर्हि रसानामपि शान्तिः, उदयः, सन्धिः, शबलता च प्रसज्येत। स च नेष्टः। अतः तन्निराकर्तुं भावशब्दः पुनरपि उपात्तः। अनेन च भावस्यैव शान्त्यादयः उपपद्यन्ते न रसस्यापि इति निष्कर्षः।

४. येन अलङ्क्रियते स उपमादिः अलङ्कारः। यः काव्यात्मा उपमादिभिः अलङ्क्रियते स काव्यात्मा रसः अलङ्कार्यः।

## १३.१२ अभ्यासप्रश्नाः

१. चतुर्थोल्लासस्य सङ्गतिः ग्रन्थकारेण कथमुपपादिता ?

२. अविवक्षितवाच्यध्वनेः लक्षणमुक्त्वा तस्य भेदद्वयमपि सोदाहरणं प्रदर्शयतु।

३. अभिधामूलध्वनौ असंलक्ष्यक्रमव्यङ्ग्यस्य संलक्ष्यक्रमव्यङ्ग्यस्य च स्वरूपं सप्रभेदं स्पष्टयतु।

४. रसादिध्वनेः रसवदलङ्कारस्य च भेदं स्पष्टयतु।

---

## चतुर्दशः पाठः ( रसस्वरूपम् )

### पाठसंरचना



## १४.१ प्रस्तावना

पाठेऽस्मिन् भवतः स्वागतम्। पूर्वस्मिन् पाठे ध्वनेः भेदाः निरूपिताः। ध्वनिः अविवक्षितवाच्यः विवक्षितान्यपरवाच्यः इति द्विविधः अस्ति। अविवक्षितवाच्योऽपि अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्यः इति द्विप्रकारः। तत्राद्ये वाच्यस्य अनुपयोगत्वं द्वितीये च वाच्यस्य अनुपपन्नत्वं लक्षणायाः बीजं वर्तते। उभयोः लक्षणामूलध्वनिभेदयोः उदाहरणमपि भवान् अधीतवान्। विवक्षितान्यपरवाच्यध्वनिरपि निरूपितः। तस्य असंलक्ष्यक्रमः संलक्ष्यक्रम इति प्रथमं द्वौ भेदौ स्तः। असंलक्ष्यक्रमव्यङ्ग्यध्वनिः अनेकभेदप्रभेदभिन्नत्वाद् एक एवेति गण्यते। रसादिध्वनिः असंलभ्यक्रमव्यङ्ग्यध्वनेः विषयो भवतीति भवान् पठितवान्। रसादिः यदा प्रधानतया काव्यार्थो भवति तदा असौ ध्वनिर्भवति। स एव रसादिः यदा अन्यस्य वाक्यार्थस्य अङ्गभूतो भवति तदानीमसौ रसवदलङ्कारस्य विषयो भवतीति पूर्वस्मिन् पाठे भवान् पठितवान् खलु।

इदानीमस्मिन् पाठे एष रसः किंस्वरूपः इति भवान् पठिष्यति। लोके अनुभूयमानेभ्यः रत्यादिस्थायिभावेभ्यः अयं कथं विशिष्टः इत्यपि रसस्वरूपनिरूपणेन सह निरूपितोऽस्ति।

## १४.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवान्-

- काव्यात्मभूतस्य रसस्य स्वरूपं ज्ञास्यति।
- लोके रत्यादेः चित्तवृत्तिविशेषस्य प्रकाशः कथं भवतीति अधिगमिष्यति।
- रत्यादिप्रतीतेः रसप्रतीतेश्च स्वरूपभेदं विषयभेदञ्च ज्ञास्यति।
- ''तत्र रसस्वरूपमाह...'' इत्यत आरभ्य ''स्थायीभावो रसः स्मृतः'' इति मूलग्रन्थांशस्य पङ्क्तिज्ञानं प्राप्स्यति।

## १४.३ मम्मटकृता रसकारिका

भारतीयालङ्कारशास्त्रे रससिद्धान्तस्य अतीव महत्त्वं वर्तते। ''नहि रसादृते कश्चिदर्थः

प्रवर्तते'' इति भरतमुनिः षष्ठे रसाध्याये तस्य महत्वं गायति। तेनैव मुनिना तस्मिन्नेव नाट्यशास्त्रे ''विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'' इति सर्वप्रथमं रसस्वरूपमपि सूत्ररूपेण निर्दिष्टम्। आनन्दवर्धनादारभ्य प्रायः सर्वे आचार्याः काव्ये रसस्यैव प्राधान्यं स्वीकुर्वन्ति। काव्यप्रकाशकारः मम्मटभट्टोऽपि चतुर्थोल्लासे रसस्य लक्षणं प्रतिपादयति। लोके विद्यमानेभ्यः रतिहासादिभ्यः स्थायिभावेभ्यः तस्य रसस्य भेदोऽपि तेन प्रदर्श्यते।

लोके सर्वेषां प्राणिनां मनस्सु केचन चित्तवृत्तिविशेषाः स्थिररूपेण तिष्ठन्ति। एते भावाः कथ्यन्ते। एते संस्काररूपेण प्रसुप्ताः अपि कदाचित् जाग्रति। यथा सर्वेषां प्राणिनां मनःसु रागभावः वर्तते। पितुः पुत्रं प्रति रागभावः, पुत्रस्य पितरं प्रति रागभावः, तरुणस्य तरुणीं प्रति रागभावः, धात्रस्य अध्ययनं प्रति रागभावः, अध्यापकं प्रति रागभावः, विद्यालयं प्रति रागभावः, आत्मनः गृहं प्रति रागभावः, गृहोपकरणानि प्रति रागभावः, वृक्षलतादीन् प्रति रागभावः इत्याद्यनन्तप्रकारेणायं दृश्यते। अयमेव रतिभाव उच्यते। भावोऽयं वैरागिणां तपस्विनामपि निश्चयेन भवत्येव। कदाचिदेते जागरिताः कदाचिच्च प्रसुप्ताः। तपस्विनाम् अयं प्रायः सुप्तो दृश्यते।

एवमेव इष्टस्य जनस्य अत्यन्तवियोगेन जनाः दुःखमनुभवन्ति। अयमेव भावः शोक उच्यते। इष्टं वस्तु कदाचित् विनष्टं भवति। तदा तस्य विनाशस्य कारणं प्रति क्रोधः जनेषु दृश्यते। अथवा लोके यः कोऽपि अधर्मम् आचरति तं प्रत्यपि क्रोधो जायते।

अनेन प्रकारेण ये केचन भावाः अस्माकं मनस्सु स्थिररूपेण तिष्ठन्ति ते स्थायिभावाः कथ्यन्ते। एते स्थायिभावाः अष्टौ भवन्ति। रतिः, हासः, शोकः, क्रोधः, उत्साहः, भयम्, जुगुप्सा, विस्मयः इति एतेषां नामानि। निर्वेद इति नवमः अपि स्थायिभावः वर्तते इति मम्मटाचार्यो वदति।

लोके एते भावाः उचितैः कारणैः प्रकाशन्ते। यथा रामस्य मनसि विद्यमानस्य रतेः प्रकाशः सीतामालम्ब्य तिष्ठति। सीता रामस्य रतेः प्रकाशे आलम्बनकारणं भवति। ''रामोऽयं सीताविषयकरतिमान्'' इति जनानां बोधो जायते। रामगतस्यास्य रतेः उद्दीपने चन्द्रचन्द्रिकादयः अपि कारणं भवति। पौर्णम्यां मनोहरे उद्याने विहरन्तीं सीतां दृष्ट्वा रामस्य सीताविषयकः रतिभावः अत्यन्तं वर्धते। अत्र रतेः उद्दीपनस्य कारणं चन्द्रः चन्द्रिका, उद्यानं, सीतायाः हाराद्याभूषणानि वा भवति। एवं कारणं द्विविधं दृश्यते। आलम्बनकारणम् उद्दीपनकारणञ्च।

यथा सीतां दृष्ट्वा रामस्य मनसि रतिभावः जागरितो भवति तथा रामं दृष्ट्वा सीतायाः अपि मनसि रतिभावः जागर्ति। तत्र रामः आलम्बनकारणं भवति। ''सीतेयं रामविषयकरतिमती'' इति च जनानां बोधो भवति।

रामे सीताविषयकरतिभावस्य उत्पत्तेः पश्चात् सीतया सह तस्य व्यवहारे सर्वत्रायं रतिभावः प्रकटितो भवति। यथा सीतां प्रति रामस्य कटाक्षाः अङ्गविक्षेपाः सर्वेऽपि रतिभावपूर्णाः भविष्यन्ति। रतिभावस्य जागरणानन्तरं रामस्य सीतायाः वा अङ्गविक्षेपेषु कटाक्षेषु च यत् वैशिष्ट्यम् अवलोक्यते तद् रतेः कार्यम् उच्यते। आलम्बनमुद्दीपनं च स्थायिनः प्रकाशे कारणं भवति। कटाक्षभुजाक्षेपादयः रतिकार्याणि भवन्ति।

रामस्य सीतायाः वा मनसि जागरितं रतिभावं प्रकाशयितुम् अश्रुपातादयः लज्जादयश्च सहकारिणः भवन्ति। रामस्य दर्शनेन स्पर्शनेन वा पुलकितां वा लज्जितां सीतां दृष्ट्वा तयोः रतिभावः प्रकाशितो भवति। अतः एतानि सहकारीणि कारणानि भवन्ति। एतानि कारणानि कार्याणि सहकारीणि च लोके स्थायिनां प्रकाशकानि भवन्ति। लोके एतैः रत्यादयः भावाः एव प्रकाशिताः भवन्ति। न तु रसाः। रसाः लोकस्य विषयाः न भवन्ति। कदाचिदपि लोके रसाः न भवन्तीति सिद्धान्तः।

एतानि एव कारणानि कार्याणि सहाकारीणि च नाट्यकाव्ययोः भवन्ति चेत् तेषां कारणत्वं कार्यत्वं सहकारित्वं वा न संभवन्ति।

मम्मटस्य रसकारिकायां ''तानि नाट्यकाव्ययोः चेद्'' इति कथ्यते। अत्र नाट्यशब्दस्य काव्यशब्दस्यापि प्रयोगेण अयं काव्यशब्दः श्रव्यकाव्यार्थः। सामान्येन काव्यशब्देन दृश्यकाव्यं श्रव्यकाव्यमिति उभयमपि गृह्यते। प्रकृते नाट्यशब्दः दृश्यकाव्यार्थे प्रयुक्तोऽस्ति। अतः पारिशेष्यन्यायात् काव्यशब्देन श्रव्यकाव्यमेव गृह्यते। मम्मटाचार्यात् प्राचीनकाले काव्यशब्दः मुख्यतया श्रव्यकाव्यार्थे एव गृह्यते स्म। दृश्यकाव्यं नाट्यमित्येव प्रसिद्धम् आसीत्। भरतमुनेः नाट्यशास्त्रे दृश्यकाव्यस्य सर्वाङ्गीणं निरूपणं दृश्यते। तत्पश्चादागता आचार्याः काव्यस्य भेदद्वयं स्वीकुर्वन्तिः श्रव्यकाव्यस्यैव साङ्गोपाङ्गनिरूपणं तत्तद्ग्रन्थेषु कृतवन्तः। तेषां हृदये काव्यमित्यस्य श्रव्यकाव्यमित्येव अर्थः आसीद् इति प्रतीयते। वामनाचार्यस्य आनन्दवर्धनाचार्यस्य अभिनवगुप्ताचार्यस्य च समये काव्यशब्दः सामान्यार्थे एव प्रयुक्तो दृश्यते। वामनाचार्यस्य काव्यालङ्कारसूत्रवृत्तिनामके ग्रन्थे 'काव्यम् ग्राह्यमलङ्कारात्' इति प्रथमसूत्रे प्रयुक्तः काव्यशब्दः दृश्यश्रव्योभयात्मकमेव काव्यं सूचयति। एवमेव ध्वन्यालोके काव्यस्यात्मा ध्वनिरिति प्रारम्भकारिकायामेव प्रयुक्तः काव्यशब्दः सामान्यार्थे प्रयुक्तोऽस्ति। अभिनवगुप्तस्य मतेऽपि काव्यमुभयात्मकं भवति। अस्तु इदानीं वयं प्रकृतमेवानुसरामः।

लोके यानि कारणानि रत्यादेः बोधकानि सन्ति तानि काव्ये विभावाः कथ्यन्ते। लोके रत्यादेः यानि कार्याणि भवन्ति तानि काव्ये अनुभावाः कथ्यन्ते। काव्ये तेषां कार्यत्वं नास्ति। एवमेव लोके यानि सहकारीणि कारणानि रत्यादेः बोधकानि दृश्यन्ते तानि काव्ये व्यभिचारिणः कथ्यन्ते।

एतैः विभावैः अनुभावैः व्यभिचारभिश्च व्यञ्जनाव्यापारेण प्रकाशितो रत्यादिस्थायिभाव एव रसः भवति। अत्र विभावानुभाव्यभिचारिणः व्यञ्जकाः भवन्ति। एतैरेव व्यङ्ग्यस्य रसस्य बोधो जायते। अतः विभावादीनां रसादेश्च मिथः व्यङ्ग्यव्यञ्जकभावः सम्बन्धः। एष एव मम्मटस्य रसकारिकायाः निर्गलितोऽर्थः।

### १४.३.१ कारणादेः विभावादिरूपेण अलौकिकनामता

लोके रत्यादीनां बोधकं कारणमुच्यते। एतच्च आलम्बनकारणम् उद्दीपनकारणम् इति द्विविधम् अस्माभिः दृष्टम्। लोकव्यवहारे यदेव कारणमुच्यते काव्ये स एव विभावः कथ्यते। काव्यं तु लोकाद् भिन्नं भवति। अत एव एतदलौकिकमुच्यते। काव्ये रत्यादीनां भावानां बोधकमपि अलौकिकं भवति। विभावः केवलं काव्ये एव भवति न तु लोके। अयं विभावोऽपि आलम्बनविभावः उद्दीपनविभाव इति द्विविधः भवति। **विभावादिशब्दप्रयोगेणैव अस्य अलौकिकत्वं स्पष्टं भवति। यतो हि लोके कारणान्येव भवन्ति न विभावाः।**

लोके रत्यादयः भावाः यदा नायकादीनां मनस्सु जागरिताः भवन्ति तदा तेषाम् अङ्गविक्षेपादयः विशिष्टाः भवन्ति। एतान् विशिष्टान् कटाक्षभुजाक्षेपादीन् अङ्गविक्षेपान् दृष्ट्वा तेषां मनसि जाताः भावाः अवगन्तुं शक्यन्ते। मनसि जागरितेभ्यः भावेभ्यः एते अङ्गविक्षेपादयो विशिष्टाः जायन्ते। अतः एते कार्याणि उच्यन्ते। अतः रत्यादिः कारणं कटाक्षभुजाक्षेपादिश्च कार्यम् भवति। नाट्ये काव्ये च एते एव कटाक्षभुजाक्षेपादयः अनुभावाः कथ्यन्ते। अनुभावशब्दप्रयोगेण च अस्य अलौकिकत्वं स्पष्टं भवति। लोके यदेव रत्यादेः कार्यं भवति स एव काव्ये अनुभाव उच्यते। कार्याणां लोकविषयत्वम् अनुभावानां काव्यविषयत्वमिति भेदः।

रामादेः नायकानां मनसि रत्यादयः भावाः उचितैः आलम्बनकारणैः उद्दीपनकारणैश्च उद्बुद्धाः भवन्ति। उद्बुद्धाः एते भावाः तत्तदुचितकटाक्षभुजाक्षेपादीनि कार्याणि जनयन्ति।

रामादीनां मनसि उद्बुद्धानामेतेषां रत्यादिभावानाम् उपचये यानि लज्जादीनि भवन्ति तानि सहाकारीणि कथ्यन्ते। काव्ये नाटये च एते व्यभिचारिभावाः कथ्यन्ते।

लोके आलम्बनोद्दीपनकारणैः लज्जादिभिः सहकारिकारणैश्च जागरितः रत्यादिस्थायिभावः कटाक्षभुजाक्षेपादिभिः कार्यैः अन्येषां प्रतीतिविषयो भवति।

काव्ये नाट्ये च आलम्बनोद्दीपनविभावैः कटाक्षादिभिरनुभावैः लज्जादिभिः व्यभिचारिभिश्च अभिव्यक्तः (व्यञ्जनया प्रतीतिविषयीभूतः) रत्यादिस्थायी एव रस उच्यते। काव्ये कविः विभावानुभावव्यभिचारिणां समुचितं वर्णनं करोति। नाट्ये च नटैः तेषाम् अभिनयः क्रियते इति विशेषः।

व्यक्तिविवेके प्रथमविमर्शे काव्यस्य नाट्यस्य च स्वरूपभेदः एवमुच्यते -

**अनुभावविभावानां वर्णना काव्यमुच्यते।**
**तेषामेव प्रयोगस्तु नाट्यं गीतादिरञ्जितम्॥** इति।

लोके रामादिषु अनुकार्येषु अयं रतिभावः वस्तुतः विद्यते। अतः अयम् अकृत्रिमो भवति। स्वभाविकत्वात्। परं नाट्ये नटेषु अयं रतिभावः वस्तुतः न जागरितो भवति। ते च चतुर्विधाभिनयबलेन अविद्यमानस्यापि रतेः प्रतीतिं दर्शकेषु जनयति। अतः अयं कृत्रिमो भवति। एतदपि विभावादीनाम् अलौकिकत्वे प्रमाणं भवति।

लोके कटाक्षभुजक्षेपादयः रत्यादेः कार्यं भवति। परं नाट्ये अनुभावोऽपि रसस्य कारणमेव भवति, न तु कार्यम्। रत्यादिभावेन विनैव नटाः तदुचितकटाक्षभुजाक्षेपाद्यभिनयेन दर्शकेषु तत्तद्भावानामनुभवं जनयन्ति। अनुभावानां रसकारणत्वं भरतमुनेः रससूत्रे स्पष्टतया उल्लिखितं वर्तते। विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति खलु रससूत्रम्। एवं कारणादेः लौकिकत्वं विभावादेश्च अलौकिकत्वं भवता अधिगतमेव स्यात्।

### १४.३.२ विभावादिस्थायिनो व्यञ्जकव्यङ्ग्यभावसम्बन्धः

लोके रत्यादेः स्थायिनः कारणकार्यसहकारीणि भवन्ति। तत्र आलम्बनम् उद्दीपनञ्च कारणं, कटाक्षभुजाक्षेपादिः कार्यं निर्वेदादिः सहाकारी च उच्यन्ते। एतदस्माभिः अधीतम्।

काव्ये नाट्ये च विभावादीनां कारणकार्यसहाकारित्वं न दृश्यते। विभावादिभिः व्यक्तः = व्यञ्जनाव्यापारेण प्रकाशविषयीभूतः स्थायी रसो भवति। एतदेवोक्तम्

अस्यां कारिकायाम् – ''व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः।'' इति। तैः अलौकिकैः विभावानुभावव्यभिचारिभिः व्यञ्जनाव्यापारेण प्रकाशविषयीभूतः (व्यक्तः) स्थायी रत्यादिरेव रसो भवतीति अस्य अर्थः।

एवञ्च यदि विभावादिभ्यः व्यञ्जनाव्यापारेण रसः प्रतीयते तर्हि विभावादिः रसस्य व्यञ्जको भवति। रसश्च व्यङ्ग्यः। अनयोः विभावादिप्रतीतिरसादिप्रतीत्योः मिथः व्यङ्ग्यव्यञ्जकभावः सम्बन्धः।

रत्यादयो भावाः सर्वेषु प्राणिषु स्थिररूपेण तिष्ठन्ति। अत एव एते स्थायिन उच्यन्ते। परं केषुचित् कदाचित् एतेषु अन्यतमः कोऽपि भावः प्रकाशमानः तिष्ठति। तदा अन्ये भावाः तस्मिन् निद्राणाः तिष्ठन्ति। निद्राणानां भावानां प्रतीतिर्न जायते। तत्तद्भावोचितैः विभावानुभावव्यभिचारिभिः व्यञ्जकैः एते भावाः अनुभवविषया जायन्ते। एवं विभावादिभिः अनुभवविषयतां गताः रत्यादिभावाः एव रसाः कथ्यन्ते।

विभावादिप्रतीतेः रसादिप्रतीतेश्च घटप्रदीपन्यायेन व्यङ्ग्यव्यञ्जकभावः सम्बन्धः।

अन्धकारमये कस्मिंश्चित् प्रकोष्ठे विद्यमानः घटः न दृष्टिविषयो भवति। परं यदि सः प्रकोष्ठः प्रदीपप्रकाशेन प्रदीप्तो भवति तर्हि प्रदीपप्रकाशेन सह घटोऽपि प्रकाशते। यदैव प्रदीपप्रकाशो भवति तदैव घटोऽपि प्रकाशते। यावत्पर्यन्तं प्रदीपप्रकाशः तिष्ठति तावत्पर्यन्तं घटोऽपि दृश्यते। अनयोः प्रदीपप्रकाशघटप्रकाशयोः व्यङ्ग्यव्यञ्जकभावः सम्बन्धः। प्रदीपप्रकाशः घटप्रकाशे व्यञ्जकहेतुः।

एवमेव विभावादिप्रतीति-रत्यादिप्रतीत्योः व्यङ्ग्यव्यञ्जकभावः सम्बन्धः। रत्यादिभावः सर्वेषां मनस्सु तिरोहितः तिष्ठति। विभावादिप्रकाशेन अयं रतिभावोऽपि प्रकाशते। विभावादिभिः प्रकाशमानः रत्यादिरेव शृङ्गारादिरसः कथ्यते। यावत् पर्यन्तं विभावादिः तिष्ठति तावत्पर्यन्तं रसोऽपि प्रकाशते। विभावादीनां तिरोधानेन रसोऽपि तिरोहितो भवति। विभावादिः रसादेः व्यञ्जकहेतुः भवति।

शास्त्रेषु हेतुः द्विविधः प्रोक्तः। कारकहेतुः व्यञ्जकहेतुश्च। यस्य कस्यचिद्वस्तुनः उत्पत्तौ यो हेतुः सः कारकहेतुरुच्यते। उत्पन्नस्य वस्तुनः कुतश्चित् प्रतिबन्धादप्रकाशमानस्य प्रकाशको हेतुः व्यञ्जकहेतुरुच्यते।

प्रकृते विभावादिः रसस्य व्यञ्जकहेतुर्भवति। विभावादीनां रसादीनां च प्रतीत्योः व्यङ्ग्यव्यञ्जकभावः सम्बन्धः। विभावादिभिरभिव्यक्तः (व्यञ्जनाव्यापारेण प्रकाशविषयतां गतः) रत्यादिरेव रसो भवति। अतः विभावादीनां रत्यादीनाञ्च प्रतीत्योः व्यञ्जकव्यङ्ग्यभावः सम्बन्धः।

**मूलग्रन्थः**

**''तत्र रसस्वरूपमाह -**
**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥**

**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥''**

**व्याख्या**

रसस्वरूपं नाम रसलक्षणं भवति। विभावाद्यैः व्यक्तः स्थायीभावो रस इति रसलक्षणम्। एतस्य लक्षणस्य कथनात् पूर्वं मम्मटभट्टः विभावादीनां परिभाषां करोति।

अन्वयः- लोके रत्यादेः स्थायिनः यानि कारणानि अथ कार्य्याणि सहकारिणि च (भवन्ति)तानि नाट्यकाव्ययोः चेत् तद् विभावाः अनुभावाः व्यभिचारिणः कथ्यन्ते। तैः विभावाद्यैः व्यक्तः सः स्थायीभावो रसः स्मृतः इति।

कारिकायामस्यां रत्यादेरिति आदिशब्दप्रयोगेण प्रसिद्धा अष्टौ स्थायिभावाः निर्दिष्टाः।

**अस्मिन्नेवोल्लासे-**

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा।**
**जुगुप्सा विस्मयश्चेति स्थायीभावाः प्रकीर्तिताः॥**

इत्येते अष्टौ स्थायिभावाः नामतो निर्दिष्टाः सन्ति।

एवञ्च स्थायीति परिभाषितस्य रत्यादेः यानि कारणानि आलम्बनोद्दीपनविशेषाः यानि च कार्याणि कटाक्षभुजाक्षेपप्रभृतयः, यानि च सहकारीणि निर्वेदादयः, लोके = नाट्यकाव्यभिन्नलोकव्यवहारे कारणादितयैव श्रूयन्ते तानि चेन्नाट्यकाव्ययोः व्यवह्रियन्ते तदा यथासङ्ख्यं विभावा अनुभावा व्यभिचारिणश्च कथ्यन्ते। एतैः विभावाद्यैः व्यक्तः = व्यक्तिविषयीकृतः स्थायीभावो रसो भवति इति कारिकायाः अर्थः।

विभावनादिव्यापारयोगात् विभावादिसंज्ञा दत्ता वर्तते। तद् यथा-वासनारूपतया स्थितान् रत्यादीन् स्थायिनः विभावयन्तीति विभावाः। विभावयन्ति = रसास्वादङ्कुरयोग्यतां नयन्ति। अनुभावयन्ति रसानित्यनुभावाः। रसपोषकतया विशेषेण अभितः काव्यं स्थायिनं चारयन्ति, विशेषेण आभिमुख्येन चरन्तीति वा व्यभिचारिणः।

अस्यां कारिकायां ''रत्यादेः स्थायिनो लोके'' इत्यत्र स्थायिनः इति पदं विशिष्टं प्रयोजनमुद्दिश्य प्रयुक्तं वर्तते। रतिः, हासः, शोकः, क्रोधः, उत्साहः, भयम्, जुगुप्सा, विस्मय इति ये अष्टौ भावाः कथिताः ते स्थायिभावाः व्यभिचारिभावाश्च दृश्यन्ते। तत्र शृङ्गाररसे हासादयः व्यभिचारिणः सन्ति। न तु स्थायिनः। तेन रसान्तरस्थायिभावस्य रसान्तरे स्थायिभावत्वं नास्ति। व्यभिचारित्वमेव। एतत् मनसि निधायैव कारिकायां ''स्थायिनः'' इति पदं प्रयुक्तम्। एतेन च स्थायिभावत्वमापन्नस्य रत्यादेरेव अत्र विषयः न तु व्यभिचारिदशापन्नानाम् इति सिद्ध्यते।

एवं कारिकायामस्यां रसस्वरूपं रसस्य अलौकिकत्वञ्च मम्मटभट्टेन प्रदर्शितमस्ति।

## १४.४ सारांशः



अस्मिन् पाठे रसलक्षणं प्रतिपादितमस्ति। विभावानुभाव्यभिचारिभिः व्यञ्जकहेतुभिः

अभिव्यक्तः स्थायीभावः एव रसः कथ्यते। अयं रसः व्यङ्ग्यो भवति। रसश्च काव्यमात्रविषयः। न तु लोकस्य विषयः। लोके तावद् रत्यादेः स्थायिभावस्य प्रकाशः तदुचितेन आलम्बनकारणेन सीतादिना, तदुचितेनोद्दीपनकारणेन उद्यानचन्द्रिकादिना भवति। कटाक्षभुजाक्षेपादयः रत्यादेः कार्याणि भवन्ति। नाट्ये काव्ये चायं रत्यादिः स्थायी विभावानुभावव्यभिचारिभिः रसरूपेण प्रकाशते। न तु कारणकार्यसहकारिभिः। कारणादीनां लोकविषयत्वम् अकृत्रिमत्वं च। विभावादीनां काव्यविषयत्वं कृत्रिमत्वं च। अयमेव अनयोः स्वरूपभेदः, विषयभेदश्च। लोकविषयत्वात् कारणादीनां रत्यादीनां च लौकिकत्वम्। काव्यमात्रविषयत्वाद् विभावादीनां रसानाम् अलौकिकत्वञ्च। विभावादयः रसस्य व्यञ्जकहेतवः। रसश्च व्यङ्ग्यः। अनयोः विभावादिप्रतीतिरत्यादिप्रतीत्योः व्यञ्जकव्यङ्ग्यभावः सम्बन्धः। अयमेव अस्याः कारिकायाः सारांशः।

## १४.५ शब्दावली

अस्यां कारिकायाम्-

१. अथ इति शब्द समुच्चयार्थे प्रयुक्तः

२. चेत् इति शब्दः यदा इत्यर्थे प्रयुक्तः

३. 'तत्' इति शब्दः तदा इत्यर्थे प्रयुक्तः

४. काव्यशब्दः श्रव्यकाव्यार्थे प्रयुक्तः

## १४.६ सन्दर्भग्रन्थः

१. काव्यप्रकाशः - सङ्केतव्याख्यासहितः आनन्दाश्रमप्रकाशनम् १९२१ ई.

२. काव्यप्रकाशः - झलकीकरवामनः भण्डारकर इन्स्टिट्यूट् पूणे १९६५ ई.

३. काव्यप्रकाशः - आदर्शव्याख्यासहितः परिमलप्रकाशनम् देहली १९८५ ई.

४. काव्यप्रकाशः - साहित्यचूडामणि-सुधासागरसहितः काशीहिन्दू विश्वविद्यालयः १९८१ ई.

## १४.७ सहायकग्रन्थः

१. व्यक्तिविवेकः - महिमभट्टः

२. नाट्यशास्त्राम् - भरतमुनिः

## १४.८ बोधप्रश्नोत्तराणि

१. विभावानुभावव्यभिचारिभिः अभिव्यक्तः स्थायीभावः रसो भवति इति रसलक्षणम्।

२. लोके रत्यादेः स्थायिनः प्रकाशः आलम्बनोद्दीपनकारणैः कार्यैः सहकारिभिश्च भवति।

३. रत्यादिः कदाचित् स्थायी भवति, कदाचित् व्यभिचारी च। अत्र स्थायिभावात्मकस्य रत्यादेः एव परामर्शः कृतः। न तु व्यभिचारिभावात्मकस्य। एतत्प्रकाशयितुमेव रत्यादेः स्थायिनः इति स्थायिनः प्रयोगः कृतः।

४. नाट्यकाव्ययोरित्यत्र काव्यशब्दः श्रव्यकाव्यार्थे प्रयुक्तो वर्तते।

## १४.९ अभ्यासप्रश्नाः

१. रसस्य आलौकिकत्वं साधयतु।

२. विभावादिप्रतीतेः रत्यादिप्रतीतेश्च व्यञ्जकव्यङ्ग्यभावं प्रदर्शयतु।

—◆—

# पञ्चदशः पाठः ( रसनिष्पत्तिः )

## पाठसंरचना



## १५.१ प्रस्तावना

पाठेऽस्मिन् भवतः स्वागतम्। पूर्वस्मिन् पाठे रसस्य अलौकिकत्वं मम्मटकृतं रसस्वरूपं च भवान् अपठत्। आचार्येषु प्रथमः भतरमुनिः नाट्यशास्त्रे प्रसिद्धं रससूत्रम् अकथयत् ''विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति''। अस्मिन् सूत्रे विभावानुभावव्यभिचारि-शब्दानामेव प्रयोगमकरोत्, न तु कारणकार्यसहकारिशब्दानाम्। रसस्य आलौकिकत्वं मनसि निधायैव मुनिः एवमुक्तवान्। इदञ्च रससूत्रम् अत्यन्तं संक्षिप्तं भवति। विचारगम्भीरमपि। अस्मिन् सूत्रे प्रयुक्तौ 'संयोगाद्' इति 'निष्पत्तिः' इति च शब्दौ बहुधा व्याख्यातुं समर्थौ। तथाहि- केचन अनयोः उत्पाद्योत्पादकभावसम्बन्ध इति उत्पत्तिरिति च, अन्ये गम्यगमकभाव-सम्बन्धः इति अनुमितिरिति च, अपरे भोज्यभोजकभावसम्बन्धः इति भुक्तिरिति च, अन्ये व्यङ्ग्यव्यञ्जकभावसम्बन्ध इति व्यक्तिरिति चार्थं व्याख्यातवन्तः। एतेषु रससूत्रव्याख्याकारेषु भट्टलोल्लटः, श्रीशङ्कुकः, भट्टनायकः अभिनवगुप्तश्च प्रसिद्धाः सन्ति। अभिनवगुप्तस्य रससूत्राव्याख्यानं विहाय अन्यानि त्रीणि अपि व्याख्यानानि अस्मिन् पाठे भवान् पठिष्यति।

## १५.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवान्-

- भरतकृतं रससूत्रं ज्ञास्यति।
- लोल्लटस्य रससूत्रव्याख्यानं ज्ञास्यति।
- श्रीशङ्कुककृतां रससूत्रव्याख्यां ज्ञास्यति।
- भट्टनायककृतां रससूत्रव्याख्यां ज्ञास्यति।
- 'उक्तं हि भरतेन' इत्यत आरभ्य... 'इति भट्टनायकः' इत्यन्तस्य मूलग्रन्थांशस्य पङ्क्तिज्ञानं प्राप्स्यति।

## १५.३ भरतकृतं रससूत्रम्

''विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'' इति भरतमुनिकृतं रससूत्रं वर्तते। नाट्यशास्त्रस्य षष्ठे अध्याये इदं सूत्रं दृश्यते। विभावानुभावव्यभिचारिणः के इति पूर्वस्मिन् पाठे भवता अधीतं खलु। विभावयन्ति आस्वादयोग्यतां नयन्तीति विभावाः कथिताः। अयञ्च आलम्बनोद्दीपनभेदेन द्विविधः। अनुभावयन्ति अनुभवविषयीकुर्वन्तीति अनुभावाः। विशेषेण अभि रत्यादीन् चारयन्तीति व्यभिचारिणः सञ्चारिणो वा कथ्यन्ते। एतैः विभावानुभावव्यभिचारिभिः स्थायिनः संयोगाद् रसनिष्पत्तिर्भवति। संयोगाद् इत्यस्य एकज्ञानविषयीभावरूपात् मिलनादित्यर्थः। तेः मिलितैरेव रसबोधो जायते। रससूत्रेऽस्मिन् संयोगनिष्पत्तिशब्दयोः आचार्याणां विप्रतिपत्तयः सन्ति। संयोगसंबन्धः उत्पाद्योत्पादकभावः, पोष्यपोषकभावः, गम्यगमकभावः, व्यङ्ग्यव्यञ्जकभाव इत्यादि बहुधा कल्पयितुं शक्यते। एवमेव निष्पत्तिशब्दस्य उत्पत्तिः, अनुमितिः पुष्टिः, व्यक्तिः इत्यादिः अनेकधा अर्थः वक्तुं शक्यते। अनेन च कारणेन आचार्याः स्वस्वदर्शनानुसोरण रससूत्रमिदं व्याख्यातवन्तः। एतेषु रससूत्रव्याख्याकारेषु भट्टलोल्लट-श्रीशङ्कुक-भट्टनायकाभिनवगुप्ताः प्रमुखाः सन्ति। अभिनवगुप्तः अभिनवभारती-नामके स्वकीये नाट्यशास्त्रव्याख्याने पूर्वेषां त्रयाणामपि आचार्याणां रससूत्रव्याख्यां प्रदर्शयति। तदनन्तरं स्वाभिमतं व्याख्यानं प्रस्तौति च। इदमत्यन्तं विस्तृतं वर्तते। मम्मटाचार्यस्तु संक्षेपेण एतेषां रससूत्राव्याख्यानं ग्रन्थेऽस्मिन् प्रत्यपादयत्।

### १५.३.१ भट्टलोल्लटव्याख्यानम्

भरतकृतरससूत्रस्य भट्टलोल्लटकृतं व्याख्यानम् अभिनवगुप्तकृते नाटयशास्त्र-व्याख्याने एव उपलभ्यते। भट्टलोल्लटस्य स्वतन्त्रः कश्चन ग्रन्थः नाद्यावधि उपलब्धः। अभिनवगुप्त-विरचितं नाटयशास्त्रव्याख्यानम् अभिनवभारतीति प्रसिद्धं वर्तते। काव्यप्रकाशे मम्मटेन अभिनवभारत्यां प्रस्तुतं रससूत्रव्याख्यानं संक्षेपेण लिखितं वर्तते।

रससूत्रस्य व्याख्याकारेषु भट्टलोल्लटः उत्पत्तिवादी गण्यते। लोल्लटमतेन विभावानुभाव्यभिचारिणां संयोगेन अनुकार्ये रामे रसः उत्पद्यते। विभावः सीतादिः मुख्यरूपेण रसस्योत्पादको भवति। अनुभावश्च उत्पन्नं रसं बोधयति। व्यभिचारिभावस्तु रसं पोषयति। स्थायिभावेन सह विभावानाम् उत्पाद्योत्पादकभावः, अनुभावानां गम्यगमकभावः, व्यभिचारिणां च पोष्यपोषकभावः सम्बन्धः। रससूत्रे विद्यमानस्य संयोगशब्दस्य पूर्वोक्तरूपेण त्रिविधः अर्थः कल्प्यते।

अमुमेवार्थं मम्मटः कथयति- ''विभावैर्ललनोद्यानादिभिरालम्बनकारणैः... प्रतीयमानो रसः'' इति ग्रन्थांशेन। विभावैर्ललनोद्यानादिभिरित्यत्र विभावः द्विविधः। आलम्बनो-द्दीपनरूपः। तत्र ललना आलम्बनकारणम्। नायकानुरागात्मनो रतेः तामवलम्ब्यैव उत्पत्तिः। नायिकारतौ तु नायक आलम्बनं भवति। उद्यानादिरुद्दीपनं कारणम्। जायमानायाः रतिधारायाः तेन उत्तरोत्तरम् उद्दीपनं भवति। ललनोद्यानादिभिरिति यथासंख्यम् आलम्बनोद्दीपनान्वयः।

एवंभूतैः विभावादिभिः रत्यादिभावः जनितो भवति। कटाक्षभुजा-क्षेपप्रभृतिभिः कार्यैः अनुभावैः प्रतीतियोग्यः कृतः रत्यादिः स्थायी रसो भवति। अत्र नायकानुरागात्मनो रतेः कटाक्षभुजाक्षेपादयः नायकगता एव। ललनाया आलम्बनरूपेण कथनत्वात्। कार्यकारणभावसम्बन्धत्वेन पूर्वत्र ललितोद्यानादेः कारणस्य कार्यज्ञापकत्वम्। अत्र तु कटाक्षभुजाक्षेपादेः कार्यस्य कारणरत्यादि-ज्ञापकत्वम्।

व्यभिचारिभिः निर्वेदादिभिः रत्यादिस्थायी उपचितो भवति। उपचयश्च शीघ्रतया अवबोधनमेव। अयं रसः कुत्र तिष्ठतीत्यत्र भट्टलोल्लटो वदति - ''मुख्यया वृत्या रामादावनुकार्ये तद्रूपतानुसन्धानबलान्नर्तकेऽपि प्रतीयमानो रसः'' इति। अयं रसः मुख्यया वृत्या = प्रधानव्यापारेण। अनुकार्ये रामादौ = ये रामादयः जीविताः आसन् ते अनुकार्याः। तेषामेवानुकरणं नर्तकाः कुर्वन्ति। एवं रसः वस्तुतः रामादावनुकार्ये एव तिष्ठतीति लोल्लट-सिद्धान्तः। तद्रूपतायाः = अनुकार्यरूपतायाः। अनुसन्धानबलात् = अनुसरणमहिम्ना उपचारेण अनुकर्तृषु नर्तकेषु अपि रसः प्रतीयते। प्रतीयते इत्यस्य व्यज्यते इत्यर्थः। व्यक्तिश्चात्र रज्जुसर्पन्यायेन नटे रामाद्यारोपः। अयञ्चोत्तरमीमांसकानां वेदान्तिनां मतेन कथितः।

भट्टलोल्लटमतेन रसस्य विभावैः सह जन्यजनकभावसंबन्धः संयोगः निष्पत्तिश्च उत्पत्तिः। अनुभावैः सह गम्यगमकभावसम्बन्धः संयोगः निष्पत्तिश्च अनुमितिः, व्यभिचारिभिः सह उपचाय्योपचायकभावसम्बन्धः संयोगः निष्पत्तिश्च उपचितिः व्याख्यातः। एवं भट्टलोल्लटः मुख्यया वृत्या रामादावनुकार्ये तद्रूपतानुसन्धानबलात् नर्तकेऽपि रसोपस्थितिं स्वीकरोति।

### १५.३.२ भट्टलोल्लटव्याख्यानसारः

भट्टलोल्लटः काव्ये नाट्ये वा कविना नटेन वा कथं रसः संयोज्यते इति वदति। न तु सामाजिकेन रसः कथम् आस्वाद्यते इति। अत एव तन्मते ललनादिभिरालम्बन-विभावैः रत्यादिकः स्थायी जनितो भवति। उद्यानादिभिः उद्दीपनविभावैः उद्दीपितो भवति। अनुभावैः कटाक्षादिभिः कार्यैः अभिव्यक्तो भवति। व्यभिचारिभिः निर्वेदादिभिः पुष्टीकृतो भवति। एवंभूतः स्थायी साक्षात्सम्बन्धेन नायके स्थितो भवति। तथापि रामस्य इव वेषविशेषादिविधायिनि नर्तके तात्कालिकरामत्वारोपात् सामाजिकैरारोप्यमाणः रसः रसपदवाच्यो भवति। आरोपस्य चायं दृष्टान्तो भवति। तथाहि- लोके असत्यपि सर्पे सर्पतया आलोकनाद् रज्जोरपि भीतिः जायते। अयमेव रज्जुसर्पन्यायः। अनेनैव प्रकारेण रामादेरनुकार्यस्य वेषविशेषादिविधायिनि नर्तके सीताविषयिणी रामस्य रतिः वस्तुतः अविद्यमानापि तस्मिन् प्रतिभासते। एवं रज्जुसर्पन्यायेन नर्तके प्रतिभासमाना रामरतिः सहृदयहृदये चमत्कारमर्पयन्ती रसपदवीमधिरोहति।

---

**मूलग्रन्थः**

**उक्तं हि भरतेन- विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति। एतद्वि-वृण्वतेविभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः रत्यादिको भावो जनितः, अनुभावैः कटाक्षभु-जाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारि-भिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानु-सन्धानबलान्नर्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लट-प्रभृतयः।**

---

**बोधप्रश्नः**

१. स्थायिनः विभावैः सह संयोगाद्रसनिष्पत्तिरित्यत्र संयोगपदस्य निष्पत्तिपदस्य च कोऽर्थः ?

२. स्थायिनः अनुभावैः सह संयोगाद्रसनिष्पत्तिरित्यत्र संयोगपदस्य निष्पत्तिपदस्य च कोऽर्थः ?

३. स्थायिनः व्यभिचारिभिः सह संयोगाद्रसनिष्पत्तिरित्यत्र संयोगपदस्य निष्पत्ति-पदस्य च कोऽर्थः ?

४. भट्टलोल्लटमतेन रसः मुख्यया वृत्त्या कुत्र तिष्ठति ?

५. भट्टलोल्लटमतेन नर्तके रसः कथं प्रतीयते ?

## १५.४ भट्टलोल्लटव्याख्यानोत्तरव्याख्यानम्

भट्टलोल्लटमतेन कार्यो रसः अनुकार्ये तिष्ठति। उपचितो रत्यादिभावः रसपदवीमधि-रोहति। पश्चाद्वर्तिनः आचार्याः अनुकार्ये रस इति लोल्लटसिद्धान्तं न स्वीकुर्वन्ति। केचन नटे रसोपस्थितिमङ्गीकुर्वन्ति। अपरे सामाजिकहृदयेषु रसः वर्तते इति वदन्ति। तत्तदाचार्याणां दर्शनभेदेन रससूत्रस्य व्याख्यानप्रकारा अपि भिन्नाः भवन्ति। अस्मिन् रससूत्रव्याख्यानक्रमे भट्टलोल्लटानन्तरं श्रीशङ्कुकस्य रससूत्रव्याख्यानं काव्यप्रकाशे प्रतिपादितं वर्तते। इदानीं वयम् श्रीशङ्कुकस्य रससूत्रव्याख्यानं पश्यामः।

### १५.४.१ श्रीशङ्कुकव्याख्यानम्

काव्यप्रकाशे ''राम एवायम् अयमेव रामः...'' इत्यत आरभ्य ''सामाजिकानां वासनया चर्व्यमाणो रसः''... इत्यन्तेन ग्रन्थांशेन श्रीशङ्कुकाभिमतं रससूत्रं व्याख्यातमस्ति। व्याख्यानमिदं प्रतिपदमत्र पश्यामः।

राम एवायम् अयमेव रामः इति ग्रन्थोक्ते वाक्ये आद्ये रामस्य प्राधान्यम्। अयमेव राम इत्यत्र इदमर्थस्य प्राधान्यम्। अनेन च वाक्यद्वयेन नटे रामोऽयमिति सम्यक्प्रतीतिः जायते।

''रामोऽयमित्यौत्तरकालिके बाधे सति रामोऽयम्'' इति मिथ्यप्रतीतिर्वर्तते। यद्यपि प्रथमं रामोऽयमिति सम्यक् प्रतीतिः तथापि उत्तरकाले एव न रामोऽयमिति बाधायाः बोधेन अस्य वाक्यार्थस्य मिथ्यात्वं स्पष्टं भवति।

रामः स्याद्वा न वायमिति वाक्ये नटं दृष्ट्वा अयं रामो वा इति सन्देहो जायते। इदमेव सन्देहज्ञानमुच्यते।

नटं दृष्ट्वा ''रामसदृशोऽयम्'' इति नटे रामसादृश्यकथनेन एतद्वाक्यजन्यं ज्ञानं सादृश्यज्ञानं वर्तते। एवं लोके सम्यङ्मिथ्यासंशयसादृश्यमिति चतुर्विधमेव ज्ञानं वर्तते। नाट्यगतं ज्ञानं तु एतेभ्यः ज्ञानेभ्यः भिन्नं भवति। तदेवोच्यते ग्रन्थे- ''सम्यङ्मिथ्यासंशय-सादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे... इत्यादिः।''

नाट्ये नटं दृष्ट्वा अस्माकं यद् रामोऽयमिति ज्ञानं जायते तद् एतेभ्यः लोके प्रसिद्धेभ्यः सम्यङ्मिथ्यासंशयसादृश्यज्ञानेभ्यः भिन्नं भवति। कीदृशं पुनरत्र ज्ञानमित्युच्यते- ''चित्रतुरगन्यायेन'' इति। यथा तुरगस्य चित्रं दृष्ट्वा तुरगोऽयमिति बालकैः गृह्यते तथा नटं दृष्ट्वा रामोऽयमिति सामाजिकैः नाट्यदर्शकैः गृह्यते। सः प्रसिद्धो रामः अयं भवति अथवा अयं स रामो भवति इत्येव ज्ञानं नाट्ये भवति। न तु स एव रामः अयमिति अथवा अयमेव रामः सः इति अवधारणपूर्वकं ज्ञानमनुभूयते।

नटस्य वाचिकाभिनयादयोऽपि रसानुमितौ हेतवः भवन्ति। वाचिकाभिनयेन

संभोगशृङ्गारस्य आलम्बनविभावः कथं प्रतीतिविषयो भवतीति उदाह्रियते -

सेयं ममाङ्गेषु सुधारसच्छटा... इत्यादिः।

अस्मात् काव्याद्रामोक्तत्वेन अनुसंहिताद् आलम्बनविभावः प्रकाशते।

अङ्गेषु सुधारसच्छटा दृशोः सुपूरकर्पूरशलाकिका, शरीरिणी मनोरथश्रीः सेयं प्राणेश्वरी मम मनसः लोचनगोचरं गता इत्यन्वयः।

सा इयं सीता या अदर्शनेन रामाय दुःखं दत्तवती पूर्वं रामस्य मनसि एव स्थिता आसीत्। इदानीं सा रामस्य मनसः सकाशात् लोचनगोचरं प्राप्ता। पूर्वं मनोगोचरा एवासीत्। अधुना तु लोचनयोरपि गोचरा जाता इत्यर्थः। सा सीता कीदृशी आसीदिति त्रिभिः विशेषणैः वर्णयति। अङ्गेषु सुधारसच्छटा सा। सर्वावयवेषु सुधारसस्य = अमृतस्य, छटा = वृष्टिः भवति। तस्याः स्पर्शनमात्रेणापि निखिलसन्तापशान्तिः भवति। पुनः सा दृशोः = नेत्रयोः, सुपूरकर्पूरशलाकिका। शोभनः पूरः = सुपूरः, पूरः = द्रवः, सुपूरः यस्य तथाभूतस्य कर्पूरस्य शलाकिका = अञ्जननलिका। तेन च सीतापि अतिशयानन्दहेतुः भवति। तथा इयं शरीरिणी मनोरथश्रीः भवति। शरीरिणी = मूर्तिमती, मनोरथस्य श्रीः = सम्पत्तिः च अस्ति। दुष्प्रापविषयेच्छा मनोरथः, तस्य विषयप्राप्तिरूपा श्रीः = सम्पत्तिः इति। एवम् अस्मात् काव्यात् सीतारूपः आलम्बनविभावः प्रकाशते। एतेन च नटे रामे संभोगशृङ्गारः प्रदर्शितः।

अनन्तरं वाचिकाभिनयेन विप्रलम्भशृङ्गारस्य आलम्बनविभावः कथं प्रतीतिविषयो भवतीति उदाह्रियते दैवादहमद्य... इत्यादिः।

अद्य अहं तया चपलायतनेत्रया दैवाद् वियुक्तः च (अभूवम्)। अविरलविलोलजलदः कालः उपागतश्च इत्यन्वयः।

इदानीम् अहं (रामः) चपले आयते च लोचने यस्याः तया सीतया, दैवाद् = दौर्भाग्यातिरेकेण, वियुक्तः = विरहितश्च अभूवम्। चपलायतनेत्रया इत्यनेन सीतायाः अतिशयसौन्दर्यम् कथितम्। तेन च तया वियोगः दुःखातिशयहेतुर्जात इत्यपि प्रतीयते। न केवलं प्रियया वियोगः इदानीं कालोऽपि विरहदुःखसंवर्धको जात इत्युच्यते- अवरिलेत्यादिना। अविरलाः = निबिडाः, विलोलाः = सर्वत्र संचारिणः, जलदाः = मेघाः यत्र तादृशः अयं = दृश्यमानः कालः = वर्षाकालः, सम्यक् प्रतिदिनं वर्धमानः, उपागतश्च = प्राप्तश्च इत्यर्थः। अनेन च रामस्य विप्रलम्भशृङ्गारस्य आलम्बनविभावरूपा सीता उपवर्णिता।

एवं प्रकारेभ्यः काव्येभ्यः नटे अनुमीयमानो रत्यादिः ''सामाजिकानां वासनया चर्व्यमाणो रस इति वदति- ''इत्यादिकाव्यानुसन्धानबालत्''... इत्यादिना सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः'' इत्यन्तेन ग्रन्थभागेन। पूर्वोक्तं यत् काव्यद्वयं भवति तादृशकाव्यानाम् अनुसन्धानबलात् = अनुशीलनसहकारेण आलम्बनविभावस्य उद्दीपनविभावस्य च अभिव्यक्तिर्भवति। ततः नटेनैव शिक्षया = उपदेशेन, अभ्यासेन च = पुनः पुनरनुशीलनेन च, निर्वर्तितस्वकार्यप्रकटनेन अर्थात् निर्विर्तितं = सम्पादितं, यत् स्वकार्यस्य = अभिनयस्य प्रकटनं = प्रकाशनं तेन। समर्थेन नटेन अभिनयद्वारा प्रकाशितः रत्यादिभावः रस इत्यर्थः। पुनश्च कीदृशोऽयं रत्यादिभावः इत्युच्यते- कार्यकारणसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्य-मानैः विभावादिशब्दव्यपदेश्यैः संयोगाद् गम्यगमकभावरूपाद् अनुमीयमान इति। तथा हि-लोके कारणकार्यसहाकारिणः स्वाभाविकाः सन्ति। काव्ये तु कृत्रिमा एते विभावाः अनुभावाः व्यभिचारिण इति यथाक्रमं कथ्यन्ते। कृत्रिमाः सन्तोऽपि एते तथा न गृह्यन्ते। एतादृशैः विभावानुभावव्यभिचारिभिः संयोगात् गम्यगमकभावरूपात् संबन्धात् सामाजिकैः अनुमीयमानः रत्यादिर्भावः रस इति वाक्ययोजना भवति।

यद्ययं रसः अनुमीयमानः तर्हि अस्य अनुमानस्य लोके प्रसिद्धेभ्यः अनुमानेभ्यः को भेद इत्युच्यते- 'अनुमीयमानोऽपि वस्तुसौन्दर्यबलाद् अन्यानुमीयमानविलक्षण' इति। काव्ये अनुमीयमानं वस्तु = अर्थः, सुन्दरं भवति। लोके अनुमीयमानः अर्थः मनोहरः नास्ति। परं काव्ये अनुमीयमानोऽर्थः सुन्दरः भवति। अतः उच्यते- ''वस्तुसौन्दर्यबलाद् अन्यानुमीयमान विलक्षण'' इति। अन्येभ्यः = रत्यादेः भिन्नेभ्यः अनुमीयमानेभ्यो अग्न्यादिभ्यो विलक्षणः = नितरां भिन्नः अयं रत्यादिर्भावः रसपदवाच्यो भवति। पुनश्चायं रत्यादिभावः कीदृश इत्युच्यते- ''तत्र असन्नपि स्थायित्वेन संभाव्यमान'' इति। तत्र = नटे, असन्नपि = वस्तुतः अविद्यमानोऽपि, स्थायित्वेन नटगतत्वेन संभाव्यमानः = ज्ञायमानः। रामादिनिष्ठरत्यादिः नटे न विद्यते। यदि रत्यादिभावः नटे न विद्यते तर्हि सामाजिकेन कथमयमास्वाद्यते इत्युच्यते- 'तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रत्यादिर्भवः रस' इति। वासना तु संस्काररूपः सर्वेषां सामाजिकानां मनसि संस्काररूपेण तिष्ठति। स एव रत्यादिः चर्व्यमाणः = आस्वाद्यमानः = पुनः पुनरनुसन्धीयमानः रसो भवतीति श्रीशङ्कुकस्य मतम्।

### १५.४.२ तद्व्याख्यानसारः

श्रीशङ्कुकः नटाश्रयरसवादम् आविष्करोति। लोके कारणकार्यसहाकारिभिः रत्यादयो भावाः अनुमीयन्ते। परं नाट्ये एते कृत्रिमाः सन्ति। अत एव एते विभावाः अनुभावाः व्यभिचारिणः इति अपूर्वैः नामभिः प्रसिद्धाः। रामादिरूपेण गृहीते नटे अविद्यमानोऽपि रत्यादिभावः सामाजिकेन अनुमीयते। कृत्रिमो भावः रसो भवति। भावानां कृत्रिमत्वं श्रीशङ्कुकमतस्य वैशिष्ट्यम् अस्ति। नाट्यास्वादने सर्वत्र अयं कृत्रिमत्वबोधो वर्तते। श्रीशङ्कुकमतेन नटे रसस्यावस्थितिर्भवति। रसश्च कृत्रिमो भावः। सामाजिकेनायं कृत्रिमो भावः अनुमीयते। अयमनुमितिव्यापारः प्रीतिप्रदः वर्तते। परन्तु प्रीतिरेव रसः इति शङ्कुकस्य मतं नास्ति। नाट्यप्रयोगे रामवेषधारिणं नटं दृष्ट्वा सामाजिकानां मनसि चित्रतुरगन्यायेन रामोऽयमिति बोधो जायते। इदञ्च आहार्यज्ञानम् उच्यते। बाधकालिकेच्छाजन्यं ज्ञानमाहार्यम्। ज्ञानमिदं लोके प्रसिद्धेभ्यः सम्यङ्मिथ्यासंशयसादृश्यज्ञानेभ्यो विलक्षणं भवति। अत्र बोधे राम एवायम् इति अयमेव राम इति वा एवकारेण अयोगान्ययोगात्यन्तायोगादयः व्यवच्छेदाः न सन्ति।

एवं चित्रतुरगन्यायेन रामोऽयमिति ग्राह्ये नटे कृत्रिमैः विभावानुभाव-व्यभिचारिभिः गम्यगमकभावरूपात् संयोगाद् अनुमीयमानः सामाजिकानां वासनया चर्व्यमाणः रत्यादिः रसः इति श्रीशङ्कुकव्याख्यानस्य निष्कर्षः।

---

**मूलग्रन्थः**

**राम एवायम् अयमेव राम इति न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयमिति, रामस्स्याद्वा न वायमिति, रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे-**

**सेयं ममाङ्गेषु सुधारसच्छटा**
**सुपूरकर्पूरशलाकिका दृशोः।**
**मनोरथश्रीर्मनसः शरीरिणी**
**प्राणेश्वरी लोचनगोचरं गता॥**

**दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च।**
**अविरलविलोलजलदः कालः समुपागतश्चायम्॥**

**इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथानभिमन्यमानैः विभावादिशब्द-व्यपदेश्यैः 'संयोगाद्' गम्यगमकभावरूपाद् अनुमीयमानोऽपि वस्तुसौन्दर्यबलाद् रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावः तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः।**

---

**बोधप्रश्नः**

१. श्रीशङ्कुकमतेन नटे रामोऽयमिति प्रतीतिः किंरूपा भवति?

२. रससूत्रे विद्यमानयोः संयोगनिष्पत्तिपदयोः श्रीशङ्कुकमतेन कोऽर्थः?

३. श्रीशङ्कुकमतेन अनुमीयमानः रत्यादिः कथमन्येभ्यो अनुमीयमानेभ्यो विलक्षणो भवति?

४. श्रीशङ्कुकमतेन रत्यादिर्भावः कुत्र तिष्ठति?

## १५.५ श्रीशङ्कुकव्याख्यानोत्तरव्याख्यानम्

श्रीशङ्कुककृतस्य रससूत्रव्याख्यानस्योत्तरम् अन्येऽपि आचार्याः रससूत्रं व्याख्यातवन्तः। तेषु भट्टतौतः भट्टनायकः भट्टाभिनवगुप्तश्च प्रसिद्धाः सन्ति। एतेषु मध्येऽपि भट्टतौतः प्रथमः आसीत्। अयञ्च भट्टाभिनवगुप्तस्य नाट्यगुरुरासीत्। भट्टतौतकृतं काव्यकौतुकम् इदानीं नोपलभ्यते। तथापि अन्येषाम् आचार्याणां ग्रन्थेषु उद्धृतेभ्यः तौतवाक्येभ्यः तन्मतं सामान्येनावगन्तुं शक्यते। शङ्कुकस्य रसानुमितेः स्थाने अयम् अनुव्यवसायं स्वीकरोति। ''साक्षात्कारकल्पकानुव्यवसायविषयी कार्यं नाट्यं भवति'' इति, 'रस एव नाट्यम् नाट्यमेव रसः' इति च तस्य सिद्धान्तः। अनुमितिज्ञानं परोक्षं भवतीति शङ्कुकमते न्यूनतां परिहर्तुमयं साक्षात्कारकल्पम् अनुव्यवसायं स्वीकरोति। प्रायः भट्टतौतस्यैव काले जीवितस्य भट्टनायकस्य रससूत्रव्याख्यानम् अभिनवभारत्याम् अभिनवगुप्तेन विस्तरेण प्रतिपादितमस्ति।

### १५.५.१ भट्टनायकव्याख्यानम्

भट्टलोल्लटेन अनुकार्ये वर्तमानस्य रसस्य उत्पत्तिरेव रसनिष्पत्तिरुच्यते। नटे रामोऽयमिति चित्रतुरगन्यायेन बोधे जाते तत्रासन्नपि रत्यादिभावः सामाजिकेनानुमीयते इति श्रीशङ्कुको वदति। साधारणीकृतैः कार्यकारणसहकारिभिः विभावानुभावव्यभिचारिव्यपदेश्यैः साधारणीकृतस्य रत्यादेः भुक्तिः निष्पत्तिरिति भट्टनायकमतम्।

**''न ताटस्थ्येन'' इत्यत आरभ्य... ''भोगेन भुज्यत इति भट्टनायकः'' इत्यन्तेन** ग्रन्थांशेन भट्टनायकाभिमतं रससूत्रव्याख्यानं प्रस्तुतमस्ति। तथाहि- ताटस्थ्येन = स्वव्यतिरिक्ताश्रयत्वेन रसः न प्रतीयते। ताटस्थ्येन रसप्रीततौ यथा घटादीनां प्रतीतौ रसनीयत्वं न भवति, तथा अत्रापि रसनीयत्वं न भविष्यति। आत्मगतत्वेनापि रसप्रतीतिर्न भवति। आत्मगतत्वेन यदि रसप्रतीतिरङ्गीक्रियते तर्हि स्वात्मनि रसस्य उत्पत्तिरिति अङ्गीकृतं स्यात्। सा च न युक्ता। यतो हि सीतादिः सामाजिकस्य विभावो न भवति। रसस्य उत्पत्तिरपि न भवति। यदि विभावादिभ्यो रस उत्पद्यते तर्हि विभावादेः निवृत्तौ अपि रसस्य स्थितिः स्यात्। कारणानिवृत्तौ अपि कार्यस्य स्थितिः लोके दृश्यते। परं विभावादिनिवृत्तौ रसोऽपि निवृत्तो भवति। तस्मान्न रसः उत्पद्यते। नापि रसः अभिव्यज्यते। सिद्धस्यैव वस्तुनः केनचित् कारणेन अप्रकाशमानस्य पुनरपि प्रकाशविषयतापत्तिरेव अभिव्यक्तिः उच्यते। यथा अन्धकारेण

अप्रकाशमानः घटः प्रदीपप्रकाशेन अभिव्यज्यते तथा सिद्धस्यैव प्रकाशः अभिव्यक्तिरुच्यते। यदि रसः अभिव्यज्यते तर्हि तस्य ततः पूर्वमपि उपस्थितिः अवश्यं भवेत्। विभावादिप्रतीतेः रसादिप्रतीतिर्भवति। न ततः पूर्वम्। अतः रसो नाभिव्यज्यते।

यदि रसः आत्मगतत्वेन ताटस्थ्येन वा न प्रतीयते नोत्पद्यते नाभिव्यज्यते तर्हि तस्य प्रतीतिः कथं भवति इत्युच्यते- ''अपि तु काव्ये नाट्ये च अभिधातो द्वितीयेन विभावादिसाधारणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमय-संविद्विश्रान्तिसतत्वेन भोगेन भुज्यत इति भट्टनायकः'' इति।

काव्ये - श्रव्यकाव्ये, नाट्ये = दृश्यकाव्ये चेति उभयप्रकारयोरपि काव्ययोः, अभिधातः = अभिधाव्यापारात्, द्वितीयेन = अनन्तरमागतेन, विभावादिसाधारणात्मना = विभावादेः साधारणीकरणरूपेण = व्यक्तिविशेषांशपरिहारेण उपस्थापनं साधरणीकरणं तद्रूपेण। भावकत्वव्यापारेण = भावकत्वमिति नामकेन व्यापारेण भाव्यमानः = साधारणीक्रियमाणः स्थायीभावः। अस्य अयमर्थः। नाट्ये काव्ये च प्रथमम् अभिधाव्यापारेण वाच्यार्थबोधः। तदनन्तरं विभावादीनां स्थायिनश्च सामान्यरूपेण अवगमनं भावकत्वव्यापारेण जायते। यथा नाट्ये रामवेषधारिणं नटं दृष्ट्वा तस्मिन् रामोऽयमिति बोधो न जायते। नापि नटोऽयमिति। अपि तु नायकसामान्यरूपो बोधः तस्मिन् जायते। एवमेव सीतावेषधारिणीषु नटीषु कामिनीत्वसामान्यबोधो जायते। रत्यादिरपि सामान्यः प्रतीयते। अस्य बोधस्य कारणं भावकत्वमेव। भावकत्वेन रत्यादिः विभावादिश्च साधारणीकृतो भवतीत्यर्थः। एवं साधारणीकृतः स्थायिभावः सत्त्वोद्रेकेण = सत्त्वगुणस्य उद्रेकेण। रजोगुणं तमोगुणञ्च अभिभूय आविर्भावः उद्रेक उच्यते। सत्त्वगुणः रजोगुणः तमोगुणः इति गुणाः त्रयः। तत्र कदाचित् सत्त्वगुण एव प्रकाशते। अन्ययोः गुणयोः तिरोभावत्वात्। अयमेव सत्त्वेद्रेक उच्यते। सत्त्वोद्रेकात् प्रकाशो यस्यानन्दस्य स एव सत्त्वोद्रेकप्रकाशानन्दः। तादृशस्य आनन्दस्य तन्मयी = तदात्मिका या संविद्विश्रान्तिः = चित्स्वभावनिवृत्तेः विश्रमः, सैव सतत्त्वं =परमार्थो यस्य तेन = सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन। एतत्स्वरूपेण भोगेन = भोजकत्वनामकव्यापारेण साक्षात्कारेण वा भुज्यते = विषयीक्रियते। यः स्वयं भुज्यते रस्यते परस्मै दीयते च स भोगः। अयम् अनुभवस्मृत्यादिविलक्षणो भवति। एवं भट्टनायकेन काव्ये व्यापारत्रयमुक्तम्। तत्राभिधा वाच्यविषयो, भावना रसविषयः, भोगश्च सहृदयविषयो भवति।

### १५.५.२ भट्टनायकव्याख्यानसारः

आचार्याणां रससूत्रव्याख्यानक्रमे भट्टनायकः प्रथमः अस्ति येन सामाजिकानां महत्त्वमङ्गीकृतम्। अनेनोच्यते यद्रसानुभूतिः न तु अनुकार्ये रामादौ न वा अनुकर्तरि नटादौ तिष्ठति। अनुकार्यः अनुकर्ता च तटस्थौ भवतः। तेन च अनयोः रसानुभूतिः न भवति। भट्टनायकेन रसस्योत्पत्तिः प्रतीतिः अभिव्यक्तिर्वा नाङ्गीक्रियते। रसः भुक्तेः विषयो भवति। रसः भोज्यः विभावादिश्च भोजकः। अनयोः परस्परं भोज्यभोजकभावः सम्बन्धः। अपि च अनेन काव्ये अभिधाव्यापारव्यतिरिक्तं भावकत्वभोजकत्वाख्यं व्यापारद्वयम् अङ्गीक्रियते।

काव्यादभिधया वाच्यार्थोपस्थितिः जायते। भावकत्वव्यापारेण विभावानुभाव-व्यभिचारिणः साधारणीकृताः भवन्ति। काव्ये नाट्ये वा प्रतिपादितानां पात्राणां सम्बन्धविशेषाः अनेन व्यापारेण विनश्यन्ते। तेन च रामादयः रामत्वादिवैशिष्ट्यं परित्यज्य केवलं नायकत्वेन सामाजिकानां दृष्टिविषयाः भवन्ति। एतदेव भावकत्वव्यापारेण निर्दिष्टं साधारणीकरणं भवति। तदनन्तरं भोजकत्वव्यापारेण सामाजिकः रसं भुनक्ति। अस्याम् अवस्थायां रजोगुणः तमोगुणश्च सत्त्वगुणेन अभिभूतौ भवतः। मनसि केवलः सत्त्वगुणः एव शिष्यते। एतेन चित्तं निर्मलं जायते निर्मले चित्ते प्रकाशमानस्य रत्यादेः साक्षात्कार एव भोग उच्यते। एवं भट्टनायकमतेन रससूत्रे विद्यमानस्य संयोगपदस्य भोज्यभोजकभावसंबन्धः अर्थः। निष्पत्तिपदस्य च भुक्तिरर्थः। अयमेव भट्टनायककृतस्य रससूत्रव्याख्यानस्य सारो भवति।

**मूलग्रन्थः**

**न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोपत्पद्यते नाभिव्यज्यते, अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यत इति भट्टनायकः।**

**बोधप्रश्नः**

१. भट्टनायकमतेन संयोगपदस्य कोऽर्थः ?

२. ताटस्थ्येन रसप्रतीतौ को दोषः ?

३. आत्मगतत्वेन रसप्रतीतौ को दोषः ?

४. रसः उत्पद्यते इत्युच्यते चेत् को दोषः ?

५. रसः अभिव्यज्यते इत्युच्यते चेत् को दोषः ?

६. भट्टनायकमतेन निष्पत्तिपदस्य कोऽर्थः ?

## १५.६ सारांशः

अस्मिन् पाठे भरतमुनेः रससूत्रं तस्य लोल्लटशङ्कुकभट्टनायककृतानि व्याख्यानानि च भवान् अपठत्। विभावानुभावव्यभिचारिसंयोगाद्रनिष्पत्तिरिति रससूत्रे कारणकार्यसहाकरिणां स्थाने क्रमशः विभावानुभावव्यभिचारिशब्दाः प्रयुक्ताः सन्ति। अनेन चैतेषाम् अलौकिकत्वं प्रतीयते। एतेभ्यो विभावादिभ्यः निष्पन्नत्वाद् रसस्यापि अलौकिकत्वं सिद्धम्। भरतस्य रससूत्रे विद्यमानौ संयोगनिष्पत्तिशब्दौ बहुधा व्याख्यातुं समर्थौ आस्ताम्। अत एव विभिन्नाः आचार्याः विचाराणां भेदेन रससूत्रमपि बहुधा व्याख्यातवन्तः।

भट्टलोल्लटमतेन आलम्बनविभावानां स्थायिनश्च उत्पाद्योत्पादकभावसंबन्धः संयोगः, निष्पत्तिश्च उत्पत्तिरुच्यते। उद्दीपनविभावानां स्थायिनश्च पोष्यपोषकभावसम्बन्धः संयोगः, निष्पत्तिश्च पुष्टिः। अनुभवानां स्थायिनश्च गम्यगमकभावसम्बन्धः संयोगः, निष्पत्तिश्च अनुमितिः कथ्यते। व्यभिचारिणां स्थायिनश्च उपचाय्योपचायकभावसम्बन्धः संयोगः, निष्पत्तिश्च उपचितिरुच्यते। एतन्मतेन अनुकार्य्ये रामादौ एव मुख्यवृत्त्या रसः तिष्ठति। रामादिरूपसमारोपात् नटेऽपि रसः प्रतीयते इति।

श्रीशङ्कुकमतेन नटे सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणा चित्रतुरगन्यायेन रामोऽयमिति प्रतीतिर्जायते। तदनन्तरं शिक्षाभ्यासबलात् नटेनैव अभिनयद्वारा कृत्रिमैः विभावानुभावव्यभिचारिभिः गम्यगमकभावरूपात् सम्बन्धात् प्रकाशितः सामाजिकानां वासनात्मा रत्यादिः अनुमीयमानो रसः कथ्यते। वस्तुसौन्दर्यबलाद् अन्यानुमीयमानेभ्यो विलक्षणोऽयं चमत्कारं जनयति। मतेऽस्मिन् संयोगपदस्य गम्यगमकभावसम्बन्धः निष्पत्तिपदस्य चानुमितिरर्थः।

भट्टनायकेन तु अभिधाव्यापारेण काव्याद् वाच्यार्थबोधः भावकत्वव्यापारेण नायकादीनां साधारणताबोधः, भोजकत्वव्यापारेण च भुक्तिः रसपदवाच्यो भवतीत्युच्यते।

विभावादीनां रत्यादेश्च भोज्यभोजकभावः संबन्धः निष्पत्तिश्च भुक्तिरस्ति। मतेऽस्मिन् भावकत्वभोजकत्वाख्यौ द्वौ व्यापारौ नूतनतया स्वीकृतौ इति विशेषः।

भट्टलोल्लटमतेन रसः अनुकार्य्ये रामादौ एव तिष्ठति। श्रीशङ्कुकमतेन रसः नटे अनुमीयते। तथापि भट्टनायकमतेन तावत् सामाजिकेषु एव रसः तिष्ठतीति विशेषः। अनेन

प्रकारेण एतेषां त्रयाणामपि आचार्याणां रससूत्रव्याख्यानानि भवता सम्यग् अवगतानि स्युः।

## १५.६ शब्दावली

| | | | |
|---|---|---|---|
| १. | विभावाः | – | विशिष्टतया भाव्यन्ते ज्ञायन्ते सामाजिकैः इति विभावाः। |
| २. | अनुभावाः | – | वागङ्गसत्त्वाभिनयैः चित्तवृत्तिरूपम् अर्थम् अनुभवन्तः अनुभाव्यन्ते साक्षात्कार्यन्ते जनाः एभिरिति अनुभावाः। |
| ३. | व्यभिचारिणः | – | विविधम् आभिमुख्येन रसेषु चरन्ति इति व्यभिचारिणः। |
| ४. | सम्यक्प्रतीतिः | – | यथार्थज्ञानम्। राम एवायम् अयमेव रामः इति सम्यक्प्रतीतिर्भवति। |
| ५. | मिथ्याप्रतीतिः | – | अयथार्थज्ञानम्। राम एवायम् इति बोधः प्रथमं जायते। ततश्च न रामोऽयमिति तस्यैव बाधाज्ञानं भवति। इयं मिथ्याप्रतीतिर्भवति। |
| ६. | संशयप्रतीतिः | – | नटं दृष्ट्वा रामः स्याद्वा न वायमिति एकस्मिन्नेव उभयकोटिकप्रतीतिः संशयप्रतीतिरस्ति। |
| ७. | सादृश्यप्रतीतिः | – | नटे रामसदृशोऽयमिति सादृश्यप्रतीतिर्भवति। |
| ८. | भावना | – | काव्ये नाट्ये च अभिधानन्तरं भट्टनायकेन स्वीकृतः शब्दव्यापारः। अनेन च विभावादीनां साधारण्यप्रतीतिर्भवति। |
| ९. | भोजकत्वम् | – | भुक्तिः-काव्ये नाट्ये च अभिधाभावनयोरनन्तरं भट्टनायकेन स्वीकृतः शब्दव्यापारः। यः स्वयं भुज्यते परस्मै दीयते च स भोगः। अयम् अनुभवस्मृत्यादिविलक्षणो भवति। |

## १५.७ सन्दर्भग्रन्थः


| | | | |
|---|---|---|---|
| १. | काव्यप्रकाशः | – | संकेतव्याख्यासहितः आनन्दाश्रमप्रकाशनम् १९२१ ई. |
| २. | काव्यप्रकाशः | – | झलकीकरवामनः भण्डारकर इन्स्टि्यूट पूणे १९६५ ई. |
| ३. | काव्यप्रकाशः | – | आदर्शव्याख्यासहितः परिमलप्रकाशनम् देहली १९८५ ई. |
| ४. | काव्यप्रकाशः | – | साहित्यचूडामणि-सुधासागरसहितः- काशीविश्वविद्यालय १९८१ ई. |


## १५.८ सहायकग्रन्थः


| | | | |
|---|---|---|---|
| १. | व्यक्तिविवेकः | – | महिमभट्टः |
| २. | नाट्यशास्त्रम् | – | भरतमुनिः |

## १५.९ बोधप्रश्नोत्तराणि

(१५.३)

१. विभावैः सह जन्यजनकभावसम्बन्धः संयोगः। निष्पत्तिश्च उत्पत्तिः।

२. अनुभावैः सह गम्यगमकभावसम्बन्धः संयोगः। निष्पत्तिश्च प्रतीतिर्भवति।

३. व्यभिचारिभिः सह पोष्यपोषकभावसम्बन्धः संयोगः निष्पत्तिश्च पुष्टिर्भवति।

४. भट्टलोल्लटमतेन रसः मुख्यया वृत्त्या रामादौ अनुकार्ये तिष्ठति।

५. भट्टलोल्लटमतेन अनुकार्यस्य रूपतानुसन्धानेन रसः नटे आरोपितः अस्ति।

(१५.४)

१. श्रीशङ्कुकमतेन नटे रामोऽयमिति प्रतीतिः चित्रतुरगन्यायेन सम्यङ्मिथ्यासंशयसदृश्यप्रतीतिभ्यो विलक्षणा भवति।

२. श्रीशङ्कुकमतेन संयोगः अनुमाप्यानुमापकभावसंबन्धः अस्ति। निष्पत्तिश्च अनुमितिरुच्यते।

३. श्रीशङ्कुमतेन अनुमीयमानो रत्यादिः वस्तुसौन्दर्यबलाद् रसनीत्यत्वेन अन्यानुमीयमानविलक्षणो भवति।

४. श्रीशङ्कुमतेन रत्यादिः मुख्यरामाद्यनुकार्यगतः अस्ति। नटेन च रत्यादिरनुक्रियते। अनुकरणरूपत्वादेव रत्यादिः नामान्तरेण रसपदेन कथ्यते। एवं नटे असन्नपि रत्यादिभावः सामाजिकेन वासनाबलात् चर्व्यते।

(१५.५)

१. भट्टनायकमतेन रससूत्रे विद्यमानस्य संयोगपदस्य भोज्यभोजकभावसम्बन्धः अर्थः।

२. स्वव्यतिरिक्ताश्रयत्वं ताटस्थ्यम् उच्यते। ताटस्थ्येन रसप्रतीतिश्चेत् तस्य घटादिप्रतीतेरिव रसनीयत्वं न स्यात्।

३. आत्मगतत्वेन रसप्रतीतिश्चेत् आत्मनि रसस्य उत्पत्तिः स्यात्। आत्मनि रसोत्पत्तौ सीतादिः आत्मनः विभावः स्यात्, न तु रामादेः इति दोषः।

४. यदि रसः उत्पद्यते तर्हि कारणस्य विभावादेः विनाशेऽपि रसस्य स्थितिः स्यात्। वस्तुतः विभावादिनाशे रसादिः नश्यते। अतः रसः उत्पद्यते इति नैव युक्तम्।

५. सिद्धस्य वस्तुनः एव अभिव्यक्तिः भवति। न तु असिद्धस्य। विभावादेः पूर्वं रसः न सिद्धः। अतः विभावादिभिः रसः अभिव्यज्यते इति वक्तुं नैव शक्यते।

६. भट्टनायकमतेन निष्पत्तिपदस्य भुक्तिरर्थः।

## १५.१०अभ्यासप्रश्नाः

१. भट्टलोल्लटेन रससूत्रव्याख्यानं कथं कृतमिति स्पष्टयतु।

२. श्रीशङ्कुकमतेन कृतं रससूत्रव्याख्यानं लिखतु।

३. भट्टनायकेन कृतं रससूत्रव्याख्यानं स्वकवाक्यैः लिखतु।

---

# षोडशः पाठः (रसनिष्पत्तौ सिद्धान्तमतम्)

## पाठसंरचना



## १६.१ प्रस्तावना

अस्मिन् पाठे भवतः स्वागतम्। पूर्वस्मिन् पाठे रससूत्रस्य भट्टलोल्लटाभिमतं व्याख्यानं, श्रीशङ्कुकाभिमतं व्याख्यानं भट्टनायककृतं व्याख्यानञ्च भवान् अपठत्। एते आचार्याः स्वस्वदर्शनानुसारेण रससूत्रस्य व्याख्याम् अकुर्वन्। अत एव एतेषां व्याख्यानानि भिन्नानि अभवन्।

रससूत्रे विद्यमानं पदद्वयं (संयोगपदं निष्पत्तिपदं च) बहुधा व्याख्यातुं समर्थम् आसीत्। अनेनैव कारणेन रससूत्रस्य व्याख्याभेदाः अपि जाताः। अन्यथा एकस्यैव रससूत्रस्य एक एव अर्थः वक्तुं शक्यः आसीत्। नानेकः।

एतेषाम् आचार्याणां रससूत्रव्याख्याप्रकारेषु क्रमिकः कश्चन विकासोऽपि भवता अनुभूतः स्यात्। तथाहि - भट्टलोल्लटमतानुसारेण रसः वस्तुतः रामादौ अनुकार्य एव तिष्ठति स्म। रज्जुसर्पन्यायेन रामादिरूपतानुसन्धानबलात् नटेऽपि रसः आरोपितः। श्रीशङ्कुकस्तावत् विभावानां कृत्रिमत्वं स्वीकृत्य चित्रतुरगन्यायेन नटे रामोऽयमिति प्रतीत्या तस्मिन्नविद्यमानोऽप्यनुमीयमानो रत्यादिः रसः इत्यवदत्। अयञ्च अनुमीयमानो रत्यादिः अन्येभ्यः अनुमीयमानेभ्यः वस्तुसौन्दर्यबलाद् विलक्षणो भवति। सामाजिकेषु वासनया स्थितो रत्यादिः आस्वाद्यते च। मतेऽस्मिन् रसः अनुकार्यं विहाय नटे आगतः। सामाजिकेष्वपि वासनारूपेण रत्यादेः स्वीकारो जात इति पूर्वस्मादस्य विशेषः। भट्टनायकमतेन रसः सम्पूर्णतया सामाजिकेषु समागतः। सत्त्वोद्रिक्ते सामाजिकहृदये भुज्यमानो रत्यादिरेव रसः इति आचार्योऽसौ अवदत्। भट्टनायकः अभिधायकत्वातिरिक्तं भावकत्वभोजकत्वाख्यं व्यापारद्वयम् आश्रित्यैव रसं व्याख्यातवान्। एतयोः नूतनयोः व्यापारयोः आविष्कारेण विनापि रसं व्याख्यातुं शक्यते इति श्रीमता अभिनवगुप्तेन उच्यते। स्वकीयं रससूत्रव्याख्यानम् एतयोः द्वयोः नूतनयोः व्यापारयोः स्वीकारेण विनैव आविष्क्रियते च।

भट्टलोल्लटादीनाम् रससूत्रव्याख्यानेषु अभिनवगुप्तेनोद्भाविताः दोषाः, अभिनवगुप्ताभिमतं रसव्याख्यानञ्च अस्मिन् पाठे भवान् पठिष्यति।

## १६.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवान् -

- भट्टलोल्लटरससूत्रव्याख्याने अभिनवगुप्तेन उद्भाविताम् आपत्तिं ज्ञास्यति।
- श्रीशङ्कुककृतरससूत्रव्याख्याने अभिनवगुप्तेनोद्भाविताम् आपत्तिं ज्ञास्यति।
- भट्टनायककृतरससूत्रव्याख्याने अभिनवगुप्तेनोद्भाविताम् आपत्तिं ज्ञास्यति।
- रसो न कार्यः नापि ज्ञाप्यः इति अभिनवगुप्तस्य सिद्धान्तं ज्ञास्यति।
- रसः कार्योऽपि भवति, रसः ज्ञाप्योऽपि भवति इति अभिनवगुप्तस्यैव सिद्धान्तं ज्ञास्यति।
- रसग्राहकं ज्ञानं न निर्विकल्पकं नापि सविकल्पकम् इति ज्ञास्यति।
- उभयाभावरूपस्य रसस्य उभयात्मकत्वमपि युज्यते इति अभिनवस्यैव सिद्धान्तं ज्ञास्यति।
- केवलविभावानां केवलानुभावानां केवलव्यभिचारिणां च प्रतिपादनेन अन्ययोः आक्षेपेण रसास्वादो भवतीति सोदाहरणं ज्ञास्यति।
- ''लोके प्रमदादिभिः'' इत्यत आरभ्य ''...नानैकान्तिकत्वम्।'' इत्यन्तस्य मूलग्रन्थस्य पङ्क्तिज्ञानं प्राप्स्यति।
- अभिनवगुप्तकृतस्य रससूत्रव्याख्यानस्य हृदयमधिगमिष्यति।

## १६.३ रसनिष्पत्तिव्याख्यानत्रयस्य पूर्वपक्षता

अभिनवगुप्तपादः पूर्वाचार्यैः कृतेषु रससूत्रव्याख्यानेषु बहुविधाम् अरुचिम् उद्भावयति। एतासामरुचीनाम् परिहारानन्तरं स्वाभिमतं व्याख्यानप्रकारमुपस्थापयति च। अत्र प्रथमं भट्टलोल्लटस्य व्याख्यानप्रकारम् अभिनवगुप्तेन प्रस्तुतं वर्तते। तत्रानुभूतान् दोषान् श्रीशङ्कुकः

परिमार्जयति। श्रीशङ्कुककृते रससूत्रव्याख्याने भट्टनायकेनापि केचन दोषाः उद्भाव्यन्ते। तेषां दोषाणां परिहारानन्तरं स्वाभिमतं रससूत्रव्याख्यानं विधीयते च। भट्टनायकस्य रससूत्रव्याख्यानप्रकारे अभिनवगुप्तपादेन दोषाः उद्भाव्यन्ते। अभिनवगुप्तः दोषानिमान् परित्यज्य नूतनं व्याख्यानमाविष्करोति च। अयमेव व्याख्याप्रकारः अधुनापि प्रायः सर्वैः आदृतः वर्तते। अनेन च व्याख्याप्रकारेण पूर्वाचार्याणां व्याख्याप्रकाराः स्वयमेव पूर्वपक्षतां गताः सन्ति। तथापि रससिद्धान्तस्य क्रमिकः विकासः एतेभ्यो रससूत्रव्याख्यानेभ्यः सम्यगवगन्तुं शक्यते। एवञ्चाद्यापि पूर्वोक्तानां सर्वेषामाचार्याणां रससूत्रव्याख्यानप्रकाराः महत्त्वपूर्णाः सन्ति।

### १६.३.१ भट्टलोल्लटस्य व्याख्याने आपत्तिः

विभावैः रत्यादिको भावः उत्पद्यते इति लोल्लटमतम्। तर्हि पूर्वं तस्याभावप्रसङ्गः स्यात्। पूर्वमविद्यमानस्य आविर्भाव एव उत्पत्तिरित्युच्यते। यदि रत्यादिः पूर्वं नास्ति तर्हि तस्य स्थायित्वमपि न भविष्यति। यदि उत्पत्तेः पूर्वं रतिर्भवतु उत्पत्तेरनन्तरं रसः भवेत् इति चेद् अन्यः दोषः भविष्यति। विभावानुभावव्यभिचारिभिः रसस्य बोधो जायते। न तु रसशब्दकथनेन। एवं रत्यादीनामपि स्वशब्दकथनेन रत्यादेर्बोधो नास्ति। यदि विभावादिभ्यः पूर्वं रतिः भवति तर्हि असौ रतिभावः कथं बुद्ध्येत। विभावादिभिरेव भावानामपि बोधः। अतः पूर्वं रत्यादेर्बोधः स्वीक्रियते चेत्तस्य स्वशब्दवाच्यत्वमेव वक्तव्यं स्यात्। एष दोषः अस्ति।

अपि च व्यभिचारिभिः परिपुष्टो रत्यादिः रसः इति लोल्लटमतम्। उपचये रसः अपचये रतिः इति तस्य सिद्धान्तः। एवं चेत् भरतेन हास्यस्य षड्भेदाः ये कथिताः ते न संभवन्ति। यतो हि हसितम् अतिहसितमित्यादयः ते भेदाः हासस्य क्रमेण परिपोषेणैव ज्ञायन्ते। यदि परिपुष्टस्यैव रसत्वम् तर्हि केवलं हासस्यैक एव भेदः स्यात्।

अपि च करुणादौ रसे एतस्य विरोधोऽपि दृश्यते। इष्टजनात्यन्तवियोगेन करुणः जायते। स च वियोगजन्यः दुःखभावः कालक्रमेण विनश्यति। अतः उपचितो रसः इति सिद्धान्तः न युक्तः।

भट्टलोल्लटेन मुख्यतया अनुकार्यगतो रसः उपचारेण तु नटगतोऽपि इत्युच्यते। एवं सति सामाजिकेषु रसानुभवः न भवति। सामाजिकेषु रसाभावे तेषां काव्ये नाट्ये वा प्रवृत्तिरपि न भविष्यति। इयमपि भट्टलोल्लटव्याख्याने प्रमुखा आपत्तिरस्ति।

### १६.३.२ श्रीशङ्कुकव्याख्याने आपत्तिः

मुख्यरामाद्यनुगतस्थाय्यनुकरणरूपः अनुकरणरूपत्वादेव नामान्तरेण व्यपदिष्टो रत्यादी रसः। तेन रतिरनुक्रियमाणा शृङ्गारः इति खलु श्रीशङ्कुकस्य रससूत्रव्याख्यानम्।

अनुकरणरूपो रसः इति वक्तुं नैव शक्यते। किञ्चिद्धि प्रमाणेनोपलब्धमेव अनुकरणमिति शक्यते वक्तुम्। यथा एवमसौ सुरां पिबतीति सुरापानानुकरणत्वेन पयः पानं प्रत्यक्षावलोकितं प्रतिभाति। अत्र अनुकार्यमनुकर्तुं किमपि प्रमाणत्वेन नोपलभ्यते।

रत्यादयो भावाः अन्तःकरणवृत्तयः सन्ति। अनुकरणन्तावत् बाह्यक्रिया अस्ति। नटस्य शरीरं वेषभूषादि कटाक्षादिकञ्च न चित्तवृत्तिरूपायाः रतेः अनुकरणत्वेन कस्यचित्प्रतिभाति। अथ च यः अनुकार्यं दृष्टवानस्ति तस्मिन्नेव अनुकरणस्य प्रतिभासो जायते। नान्यस्मिन्। रामादिगतस्य रतेः, रामादेर्वा ज्ञातारः इदानीं न सन्ति। एतेन रामानुकारो नट इत्यपि निरस्तः।

सामाजिकेषु रसोपस्थितिर्वक्तुं श्रीशङ्कुकेन प्रयासः कृतः। कृत्रिमैः विभावादिभिः कृत्रिमस्य रत्यादेः स्थायिनः गम्यगमकभावेन सम्बन्धेन कृत्रिमा रामसीतादि-विषयिणी रतिः अनुमीयते इति खलु तस्य सिद्धान्तः। एतेन सामाजिकस्य रसानुभूतिः स्पष्टरूपतया नैव व्याख्याता दृश्यते। सामाजिकेषु रसस्य साक्षात्कारः वक्तव्यः। अनुमानेन जायमाना रसानुभूतिः परोक्षात्मिका वर्तते। न तु साक्षात्कारात्मिका। एषा अनुमितिश्च सम्पूर्णरूपेण कृत्रिमाऽपि भवति। अतः रसास्वादनस्य व्याख्याने श्रीशङ्कुकस्यानुमितिवादोऽपि सफलो नास्ति।

### १६.३.३ भट्टनायकव्याख्याने आपत्तिः

बहुषु अंशेषु भट्टनायककृतं रससूत्रव्याख्यानम् अभिनवगुप्तः अङ्गीकरोति। सम्पूर्णतया भट्टनायकस्य रससिद्धान्तं भट्टाभिनवगुप्तः न खण्डयति। भावकत्वव्यापारेण साधारणीकृतात्मा रत्यादिरेव भुज्यमानो रसः। साधारणीकृतो भावः भुज्यते, भुक्तिरेव रसः इत्येव खलु भट्टनायकमतम्। अत्र च भुक्तिः आन्तरा काचन क्रिया वर्तते। रत्यादिभावश्च साधारणीकृतो बाह्यः भावः। लोल्लटमते शङ्कुकमते च रसः बाह्य एवासीत्। अभिनवगुप्तस्तु रसस्य साकल्येन आत्मनिष्ठत्वं स्वीकरोति।

भट्टनायकेन काव्ये लोकाद्भिन्नौ भावकत्वभोजकत्वाख्यौ व्यापारौ समाविष्कृतौ। परमेताभ्यां व्यापाराभ्यां विनाऽपि रसास्वादः सुष्ठु संभवति। तेन चेमौ व्यापारौ अनपेक्षितौ इत्येव भट्टनायकस्य रससूत्रव्याख्याने प्रमुखा आपत्तिः।

### १६.३.४ अभिनवगुप्तमतेन रससूत्रव्याख्यानम्

काव्यप्रकाशे अभिनवगुप्तस्य रससूत्रव्याख्यानप्रकारः ''लोके प्रमदादिभिः'' इत्यत आरभ्य ''शृङ्गारादिको रसः'' इत्यन्तेन भागेन समाख्यातो भवति।

प्रथमन्तावत् केषां रसास्वादो भवितुमर्हतीत्युच्यते लोके = काव्यनाट्यभिन्न-स्थले, प्रमदादिभिः आलम्बनकारणैः उद्यानादिभिः = उद्दीपनकारणैः, कटाक्षनिर्वेदादिभिः सहकारिकारणैश्च स्थाय्यनुमाने = स्थायिनः अनुमानविषये, अभ्यासपाट-ववताम् = अभ्यासः पाटवञ्च यस्मिन् तद्युक्तानाम्, अभ्यासः = पुनःपुनरनुशीलनम्। एवं लोके वारं वारं नायकनायिकयोः व्यवहारं दृष्ट्वा नायकोऽयं नायिकाविषयरतिमान्, नायिकेयं नायकविषयिणी रतिमती इति च यः अनुमातुं प्रभवति स एव काव्यात् नाट्यात् च रसानुभवे अधिकारी भवेद् इति।

अयं रसः कीदृशः इत्युच्यते- ''काव्ये नाट्ये च...'' ''तैरेव अभिव्यक्तः स्थायी रसः'' इति। तद्यथा -

काव्ये = ध्वन्यादिरूपे, नाट्ये = नटप्रयोगात्मके च, तैरेव = तैः पूर्वोक्तैः प्रमदादिभिः कारणादिभिरेव। काव्ये एतेषां कारणादीनां किंस्वरूपमित्युच्यते-कारणत्वादि-परिहारेण = कारणत्व-कार्यत्व-सहकारित्वादिपरित्यागेन। विभावनादिव्यापारवत्वाद् = विभावना-नुभावन-व्यभिचारणादिव्यापारवत्वात्। लोके ये कारणकार्यसहकारिणः प्रमदादयः सन्ति, काव्ये ते एव यथाक्रमं विभावानुभावव्यभिचारिणः कथ्यन्ते। अत एव ''अलौकिक-विभावादिशब्दव्यपदेश्यैः'' = अलौकिकैः = लोकोत्तरैः, लोकस्वभावभिन्नैः इत्यर्थः। अलौकिकैः विभावानुभावव्यभिचारिशब्दव्यपदेश्यैः = काव्ये विभावादिशब्दैः प्रसिद्धैः इति। लोके हर्षशोककारणेभ्यः हर्षशोकाः एव जायन्ते। काव्येभ्यः पुनः सर्वेभ्यः सुखमेव इति एतेषाम् अलौकिकत्वम्। एवं लोके विद्यमानानां कारणादीनां काव्ये विद्यमानानां विभावादीनां

च भेदः सुस्पष्टं प्रकाशितः। विभावादीनाम् अलौकिकत्वमपि सिद्धम्। इदानीं काव्ये रत्यादीनां प्रतीतिः कथं जायते इति कथयति – ''ममैवेते, शत्रोरेवैते, तटस्थस्यैवेते, न ममैवेते, न शत्रोरेवैते, न तटस्थस्यैवेते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैः'' इति। अत्र ममैवेति त्रयेण विभावादीनां स्वीकारनियमः न ममैवेतित्रयेण तेषां परिहारनियमश्च उच्यते। तयोः स्वीकारपरिहारयोः अनध्यवसायाद् = अनिश्चयात्, अयं विभावादिः ममैवेति निश्चयो न भवति नापि न ममैवेति। एवमेव शत्रोरेवेति न शत्रोरेव इत्यादि बोधोऽपि। बोधेऽस्मिन् पूर्वोक्तः सम्बन्धविशेषः नास्ति चेत् किंस्वरूपा इयं प्रतीतिः इत्युच्यते– ''साधारण्येन प्रतीतैः'' इति। साधारण्येन इत्यस्य सीतात्वादिविशेषांशरहितेन कामिनीत्वादिना प्रतीतैः = ज्ञायमानैः। एवं साधारण्येन प्रतीतैः विभावादिभिः अभिव्यक्तः = आविर्भूतः स्थायीभावो रत्यादिः।

किंरूपोऽसौ रत्यादिः इत्युच्यते – सामाजिकानां वासनात्मतया स्थितः इति। सामाजिकानां = काव्यपठितृणां नाट्यदर्शकानाञ्च, वासनात्मतया = वासनारूपेण संस्काररूपेण सूक्ष्मतया स्थितः = पूर्वमेवावस्थितः इति। अत एव स्थायित्वं तेषाम्। अनेन च सहृदयेन साधारणीकृतैः विभावादिभिरभिव्यक्तः आत्मनि संस्काररूपेणावस्थितः रत्यादिः स्थायी आस्वाद्यते इति निश्चीयते। पुनश्चायं रत्यादिः कथमस्ति इत्युच्यते– नियतप्रमातृगतत्वेन स्थितोऽपि इति। रसास्वादकत्वेन निश्चितः प्रमाता सामाजिकः। तद्गतत्वेन स्थितोऽपि। यद्यपि रसास्वादः निश्चितानां सामाजिकानां सम्बन्धत्वेन तिष्ठति तथापि असौ रसास्वादः नियतप्रमातृगतत्वेन न प्रतीयते = तर्हि असौ कथं प्रतीयते, तथा प्रतीतौ च कारणं वदति – ''साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकल-सहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणः'' इति। साधारणो यः उपायः तद्बलात्। साधारणः = व्यक्तिविशेषसम्बन्धित्वेन अप्रतीयमानः, यः उपायः = विभावादिः, तद्बलात्। तत्कालविगलितपरिमितप्रमातृभावः = तत्काले = रसास्वादनकाले, विगलितः = अप्रतीतः। तत्कालविगलितः यः परिमितप्रमातृभावः = तत्कालविगलितपरिमितप्रमातृभावः। परिमितप्रमातृबोधः = ममैवेते शत्रोरेवैते, अहमेव रसास्वादयिता इत्यादिबोधः। एवंविधः बोधः रसास्वादकाले नानुभूयते इत्यर्थः। एवमननुभूयमानव्यक्तिविशेषसम्बन्धः = तत्कालविगलितपरिमितप्रमातृभावः। तद्वशात् = तेन कारणेन उन्मिषितः = प्रादुर्भूतः। अपि च वेद्यान्तरस्य = अन्यत् वेद्यं वेदनीयं वेद्यान्तरं, तस्य। लौकिकविषयस्य सम्पर्केण = सम्बन्धेन, शून्यः = रहितः। अपरिमितः = अगणितो भावः = चित्तवृत्तिविशेषो यस्य सः = तत्कालोन्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावः। तेन प्रमात्रा = रसास्वादकेन कर्त्रा। गोचरीकृतः इत्यनेन प्रमात्रा इत्यस्य सम्बन्धः। अस्य च प्रमातुः विशेषणमाह– सकलसहृदयसंवादभाजा = सकलानां सहृदयानां सम्मतिशालिना इति। एतादृशेन प्रमात्रा साधारण्येन = प्रमातृविशेषानालिङ्गितेन गोचरीकृतः = शृङ्गारादिको रसो भवतीति। अस्य रसस्य बोधः कथमस्तीत्युच्यते। ''स्वाकार इवाभिन्नोऽपि'' इति। स्वाकार इवेत्यनेन बौद्धानां ज्ञानसिद्धान्तः कथ्यते। योगाचारबुद्धमतेन ज्ञानस्य विषयः ज्ञानादभिन्नः ज्ञानस्यैवाकार इति सिद्धन्तः। एवमेव आनन्दात्मकास्वादरूपस्य रसस्य आस्वादोऽपि। रसः आस्वादनस्वरूपः वर्तते। तथापि रसः आस्वाद्यते इति आस्वादस्य विषयरूपेणापि वक्तुं शक्यते। 'स्वाकार इवाभिन्नोऽपि' इत्यस्य चर्व्यमाणः इत्यनेन अन्वयः। चर्व्यमाणः = आस्वाद्यमानः। अयं चर्व्यमाणो रसः पुनः कीदृशो भवतीत्युच्यते – ''चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः'' इति। चर्व्यमाणता = पुनःपुनरास्वाद्यमानता तदेकप्राणः = तद् रसचमत्कारः एव प्राणः यस्य सः। तद्व्यतिरेके निस्सारत्वात्। रसो नाम चर्व्यमाणता एव भवतीत्यर्थः। जीवितम् एव अवधिः = सीमा यस्य सः। यावन्तं कालं विभावादिस्फुरणं वर्तते तावन्तमेव कालं रसचर्वणापि तिष्ठति। यदा विभावादिप्रतीतिः विरता भवति तदा रसप्रतीतिरपि विरमति। अनेन च रसः न सिद्धस्वभावः

अपि तु तात्कालिकः इति सिद्ध्यते। विभावानुभावव्यभिचारिषु कस्यचिदेकस्यैव चर्वणया रसास्वादो न भवति। सर्वेषामपि त्रयाणां चर्वणैव रसास्वादे कारणं भवति। अयमर्थः दृष्टान्तेन निरूप्यते- 'पानकरसन्यायेन' इति। एलामरीचगुडादीनां भिन्नभिन्नरुचियुक्तानां पदार्थानां सम्मिश्रणेन पानकं निर्मीयते। पानकस्य च एतेभ्यः सर्वेभ्यः पदार्थेभ्यः विलक्षणा काचन रुचिरस्ति। प्रत्येकम् अनेनैव प्रकारेण विभावानुभावव्यभिचारिणां प्रत्येकं स्वभावात् विलक्षणस्वभावः रसः निष्पद्यते इति दृष्टान्तेन अनेन विवक्षितम्। पुनश्च कीदृशः अयं रसानुभवः इति आचार्यः कथयति – ''पुर इव परिस्फुरन्, हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत्सर्वमिव तिरोदधद् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः'' इति। अयं शृङ्गारादिकः अष्टौ वा नवसंख्यको वा रसः पुरः = अग्रे, परिस्फुरन् = प्रकाशमान इव अनुभूयते। हृदयं प्रविशन्निव इत्यनेन रत्यादेः स्थायित्वादनुकार्यरामहृदयात् सामाजिकहृदयानामभेदः प्रकाशितो भवति। सर्वाङ्गीणमिवालिङ्गन् = यथा सर्वाङ्गव्यापनपूर्वकम् आलिङ्गनं भवति तथैवायं रसानुभवोऽपि इत्यर्थः। अनेन च नृत्तगीतादीनां बहुविधानां नाट्यधर्मिणाम् उपस्थितिरुच्यते। अन्यत् सर्वं : ज्ञेयं वस्तु तिरोदधद् = आच्छदयन् इव। रसानुभववेलायाम् अन्यत् किमपि ज्ञेयं वस्तु नानुभूयते इत्यर्थः। अनेन च रसानुभवस्य विगलितवेद्यान्तरत्वं स्पष्टं भवति। अयं रसास्वादः ब्रह्मास्वाद इव भवति। अनेन चास्य लोकोत्तरचमत्कारिता प्रकटिता भवति। पुर इवेत्यादिना रसानुभवस्य अलौकिकत्वं प्रतीयते। अयञ्च रसानुभवः अलौकिकचमत्कारकारी = लौकिकसामग्रीजन्यः यः चमत्कारः तस्माद् विलक्षणः = भिन्नः = लोकोत्तरः भवति।

एवं काव्ये साधारण्येन प्रतीतैः विभावादिभिः अभिव्यक्तः सामाजिकानां वासनात्मतया स्थितो रत्यादिकः स्थायी पानकरसन्यायेन चर्व्यमाणः अलौकिकचमत्कारकारी रसो भवति इति अभिनवगुप्तपादानां सिद्धान्तः।

---

**मूलग्रन्थः**

**लोके प्रमदादिभिः, स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्वादलौकिकविभावादिशब्दविभावादि-शब्दव्यवहार्य्यैर्ममैवेते, शत्रोरेवैते, तटस्थस्यैवेते, न ममैवेते, न शत्रोरेवैते न तटस्थस्यैवेत इति सम्बन्धिविशेषस्वीकारपरिहारनियमानध्यवसायात्साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्ममया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारण्योपायबलात्तत्कालविगलितपरिमितप्रमातृवशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्य-माणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधद् ब्रह्मानन्दास्वाद-मिवानुभावयन्नलौकिकचमत्कारकारी शृङ्गारादिको रसः।**

---

**बोधप्रश्नः**

१. भट्टलोल्लटकृते रससूत्रव्याख्याने प्रमुखः दोषः कः?

२. उपचितो रसः इति स्वीक्रियते चेत् को दोषः?

३. अनुकरणरूपो रसः इति स्वीक्रियते चेत् को दोषः?

४. अनुमीयमानो रसः इति स्वीक्रियते चेत् को दोषः?

५. भट्टनायकमते प्रमुखा आपत्तिः का?

६. अभिनवगुप्तमतेन संयोगनिष्पत्तिशब्दयोः कः अर्थः?

## १६.४ रसस्य लोकोत्तरताप्रतिपादनम्

रसानुभवः लौकिकानुभवविलक्षणः इति भवान् पठितवान्। लोके कारणादिः भवति न विभावादिः। काव्ये विभावादिः भवति न कारणादिः। लोके रतिशोकादेः हर्षशोकादिः यथायथं जायते। काव्ये रतिशोकादेः केवलमानन्द एवानुभूयते। सोऽपि परमानन्दः। अनेन प्रकारेण रसस्य काव्यैकविषयत्वादलौकिकत्वम् अभिनवगुप्तपादेन सुष्ठु प्रतिपादितं भवति। अभिनवगुप्तस्यायमलौकिकत्वसिद्धान्तः काव्यप्रकाशकारेण चतुर्थोल्लासे ''स च न कार्यः-- '' इत्यारभ्य 'पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधम्' इत्यन्तेन ग्रन्थभागेन प्रस्तूयते। अधुना भवान् सिद्धान्तममुं विस्तरेणाधिगमिष्यति।

### १६.४.१ रसो न कार्यः

भरतकृते रससूत्रे 'संयोगाद्' इति पञ्चमीविभक्तिरस्ति। पञ्चमी च हेत्वर्थे प्रयुज्यते। तथा च संयोगादित्यस्य संयोगेन हेतुना इत्यर्थः। लोके हेतुः द्विविधः वर्तते। कारकहेतुः, ज्ञापकहेतुश्च। पूर्वमविद्यमानस्य कस्यचिद्वस्तुनः उत्पत्तौ यो हेतुः भवति सः कारकहेतुरुच्यते। तस्मात् कारकहेतोः जातः पदार्थः कार्यः भवति। यथा दण्डचक्रादयः पदार्थाः घटरूपस्य कार्यस्य कारकहेतुर्भवति।

पूर्वं विद्यमानः कोऽपि पदार्थः केनापि प्रतिबन्धेन इदानीम् अप्रकाशमानः तिष्ठति। तत्र तं प्रतिबन्धं विनाश्य तस्य पदार्थस्य प्रकाशने यः हेतुः सः ज्ञापकहेतुरुच्यते। तस्माद् हेतोः जायमानः पदार्थः ज्ञाप्यः भवति। यथा अन्धकाररूपेण प्रतिबन्धेन अप्रकाशमानः घटः प्रदीपप्रकाशेन प्रकाशितो भवति। अत्र प्रदीपः घटस्य ज्ञापकहेतुः भवति। एवं लोके कारकज्ञापकाभ्यां हेतुः द्विविधः अस्ति।

प्रकृते रसः कार्योऽपि न भवति। ज्ञाप्योऽपि न भवति। तत्रादौ रसस्य कार्यत्वं निराकरोति ''स च न कार्यः विभावादिनाशेऽपि तस्य सम्भवप्रसङ्गात्'' इति ग्रन्थांशेन। रसः कार्यो न भवति विभावादिः कारकोऽपि। लोके कारणनाशेऽपि कार्यस्य स्थितिः दृश्यते। दण्डादिनाशेऽपि घटः तिष्ठत्येव न विनश्यति। परमत्र विभावादिनाशेन रसोऽपि नश्यति। 'रसः विभावादिजीवितावधिः' इति भवान् पठितवान्। यदि रसः कार्यः इति स्वीक्रियते तर्हि विभावादिहेतोः विनाशेऽपि रसस्य सम्भव इति प्रसङ्गो = दोषः जायते। तेन च रसः कार्यो न भवति। घटादीनामेव कार्यत्वं न तु रसस्य इति सिद्धान्तः।

### १६.४.२ रसो न ज्ञाप्यः

रसः ज्ञाप्योऽपि न भवति। पूर्वं सिद्धः पदार्थ एव ज्ञापकहेतोः प्रकाशते। अत्र तु विभावादिप्रतीतेः पूर्वं रसः नैव विद्यते। अतः विभावादेः ज्ञापकहेतुत्वं नास्ति। रसस्य नापि ज्ञाप्यत्वम्। अयमेवोच्यते- मूलग्रन्थे - ''नापि ज्ञाप्यः सिद्धस्य तस्यासम्भवात्'' इति। सिद्धः = विद्यमानः। यदि रसः न कार्यः नापि ज्ञाप्यः तर्हि किं रूपोऽसौ इत्युच्यते- ''अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः'' इति। व्यञ्जितः इत्यस्य दीपादिव्यङ्ग्यलौकिकघटादिवैलक्षण्येन व्यञ्जनया गृहीतः सन् चर्वणीयः = पुनः पुन-रास्वादनीयः। विभावादेः कारकहेतुत्व-ज्ञापकहेतुत्वयोः अन्यतरत्वं (द्वयोः एकः = अन्यतरः) नास्ति चेदयं दोषः स्यात्। यतो हि लोके कारकहेतुः ज्ञापकहेतुर्वा भवति। अनयोर्भिन्नः तृतीयः नास्ति। एतद्विषयं ग्रन्थकारो वदति- ''कारकज्ञापकत्वाभ्यामन्यत् क्व दृष्टमिति चेद् न क्वचिद् दृष्टमित्यलौकिकत्व-सिद्धेर्भूषणमेतन्न दूषणम्'' इति।

रसः अलौकिकः इति सिद्धान्तः। यश्च लोके न दृश्यते स एवालौकिकः खलु। तद् यदि कारकज्ञापकाभ्यामन्यत् लोके न दृश्यते काव्ये च दृश्यते तर्हि रसस्य अलौकिकत्वं तेनैव सिद्ध्यति। एतच्च अस्माकम् इष्टमेवेति मम्मटकथनस्य आशयः।

### १६.४.३ कार्योऽपि रसः



आचार्यः रसस्यालौकिकत्वम् अन्यथापि विस्तरेण कथयति। तस्मिन् क्रमे रसस्य कार्यत्वमपि साधयति। ''चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्'' इति। चर्वणायाः निष्पत्त्या = चर्वणानिष्पत्त्या। चर्वणा नाम रस्यमानता आस्वाद्यमानता वा। विभावादेः संयोगेन चर्वणा जायते। चर्वणायाः निष्पत्तिः भवति चेत् रसस्यापि परम्परया निष्पत्तिः भवत्येव। तस्य रसस्य निष्पत्तिः उपचरिता = परम्परया जायमाना इति हेतोः रसः कार्यः इत्यपि वक्तुं शक्यते। विभावादिभ्यः चर्वणा जायते चर्वणया च रसः इति रसः कार्योऽपि वक्तुं शक्यते। एवं रसः कार्यः इति रसः न कार्यः इति च उभयः पक्षः अपि अत्र स्वीक्रियते।

### १६.४.४ ज्ञाप्योऽपि रसः

रसः पूर्वं विद्यमानः नास्तीति तस्य ज्ञाप्यत्वम् आचार्येण निराकृतम्। इदानीं प्रकारान्तरेण रसः ज्ञाप्योऽपि भवितुं शक्यत इति कथ्यते- ''लौकिकप्रत्यक्षादिप्रमाण-ताटस्थ्यावबोधशालिमितियोगिज्ञान-वेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसित परिमितेतरयोगि-संवदेनविलक्षण-लोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्'' इति।

लोके त्रिविधं ज्ञानं प्रसिद्धं वर्तते। लौकिकप्रत्यक्षादिप्रमाणजन्यं ज्ञानं तत्र प्रथमम्। एतस्मात् ज्ञानात् रसज्ञानं विलक्षणं भवति। रसानुभवे चमत्कारकारित्वं वर्तते न तु प्रत्यक्षादिप्रमाणज्ञाने इति वैलक्षण्यम्। द्वितीयं ताटस्थ्यावबोधशालिपरिमितयोगिज्ञानं भवति। अत्र ताटस्थ्येन = स्वात्मानं विना यः परस्य बोधः = तेन शालते = शोभते यत् परिमितयोगिज्ञानम् इति पदार्थः। परिमितयोगी = युञ्जानयोगी। लोके विद्यमानं समस्तमपि पदार्थजातं तस्मै ताटस्थ्येन प्रतीयते। रसानुभवः एतस्मात् ज्ञानाद् अपि विलक्षणं भवति। काव्यात् रसानुभवे ताटस्थ्यप्रतीतिः नास्तीति परिमितयोगिज्ञानात् विलक्षणः रसानुभवः। लोकेषु प्रसिद्धं तृतीयं ज्ञानम् अपरिमितयोगिज्ञानमुच्यते इदमेव युक्तयोगिज्ञानमित्यपि कथ्यते। इदं ज्ञानं वेद्यान्तरसंस्पर्शरहितं स्वात्ममात्रपर्यवसितं च भवति। वेद्यम् = ज्ञेयं वस्तु, अन्यत् वेद्यं = वेद्यान्तरम्। वेद्यान्तरस्य संस्पर्शेन रहितम् = वेद्यान्तरसंस्पर्शरहितम्। स्वात्ममात्रम् = आत्मनि एव, पर्यवसितं = निष्ठम्। आत्मात्रनिष्ठमित्यर्थः। अस्मिन् अपरिमितयोगिज्ञाने लोके विद्यमानं किमपि ज्ञेयं वस्तु विषयत्वेन न तिष्ठति। केवलम् आत्मैव आत्मानमेव अनुभवति।

काव्याद् जातं रसज्ञानम् एतस्माद् अपरिमितयोगिज्ञानादपि विलक्षणं भवति। स्वात्मगतत्वेन रसप्रतीतेः निषिद्धत्वात्। एवं त्रिविधादपि लोकप्रसिद्धात् ज्ञानात् इदं रसज्ञानं विलक्षणं भवति। अत एवोच्यते - 'लोकोत्तरस्वसंवेदनगोचर' इति। अयं रसः लोकोत्तरसस्य अलौकिकस्य स्वसंवेदनस्य = आत्मज्ञानस्य गोचरो भवति। अनया दृष्ट्या अयं रसः प्रत्येयः = ज्ञाप्यः अपि वक्तुं शक्यते।

### १६.४.५ रसग्राहकं न निर्विकल्पकम्

इदानीम् रसस्य अलौकिकत्वम् आचार्यः अन्यथापि प्रतिपादयति। तथाहि- लोके वेदान्तिमतेन ज्ञानं निर्विकल्पकं, सविकल्पकम् इति द्विविधम् भवति। रसज्ञानं एताभ्यामपि विलक्षणं भवति। नामरूपजात्यादिविशेषरहितं ज्ञानं निर्विकल्पकं भवति। इदं नाम, इदं रूपम्, इयं जातिः इत्यादयः पदार्थानां विकल्पाः सन्ति। विकल्परहितं ज्ञानं निर्विकल्पकं भवति। रसज्ञाने तावद् विभावादयः विकल्पाः सन्ति। अतः नास्त्यसौ निर्विकल्पकम्। तदेवोच्यते ग्रन्थकारेण - ''तद्ग्राहकं च न निर्विकल्पकम्। विभावादिपरामर्शप्रधानत्वात्'' इति। विभावादीनां परामर्शः = सम्बन्धः प्रधानं यस्य तद्भावत्वात् इति शब्दार्थः। विभावादिपरामर्शस्य सविकल्पकतया निर्विकल्पकजननायोग्यत्वम्। अतः रसज्ञानं न निर्विकल्पकम्।

### १६.४.६ रसग्राहकं न सविकल्पकम्

रसग्राहकं ज्ञानं सविकल्पकमपि नास्ति। यस्मिन् ज्ञाने नामरूपजात्यादिज्ञानं विशेषणतया भासते तद् सविकल्पकं ज्ञानं भवति। रसानुभवः वेद्यान्तरस्पर्शशून्यः अस्तीति पूर्वमेव कथितमस्ति। अतः एतस्य निर्विकल्पकत्वं सिद्धम्। एतदुच्यते ग्रन्थकारेण – ''नास्ति सविकल्पकम् चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्'' इति। रसग्राहकं ज्ञानं सविकल्पकं न भवति। कस्मात्? चर्व्यमाणो रसः अलौकिकानन्दप्रचुरो भवति। तादृशस्य रसस्य स्वसंवेदनमात्रसिद्धत्वात् = स्वात्मकप्रतीतिमत्रसिद्धत्वादिति। रसास्वादनकाले ज्ञानान्तरस्यासंभवेन नामरूपजात्याद्युल्लेखो न संभवति। तेन चास्य सविकल्पकत्वमपि नास्तीत्यर्थः।

### १६.४.७ उभयाभावस्य उभयात्मकत्वमपि

रसस्य कार्यत्वं ज्ञाप्यत्वं च आदौ निराकृत्य पश्चाद् उभयमपि स्वीकृतम्। इदानीं रसस्य सविकल्पकत्वं निर्विकल्पकत्वमिति उभयमपि निराकृतम्। सविकल्पकत्व-निराकरणेन निर्विकल्पकत्वं, निर्विकल्पकत्वनिराकरणेन सविकल्पकत्वं चास्य सिद्धम्। एवमुभयाभावकथनेन उभयात्मकत्वमपि सिद्ध्यते। ततश्च उभयात्मकम् उभयाभावमपि यद् भवति तत् लोकोत्तरमेव भवति इति ग्रन्थकाराणामाशयः। अमुमेवार्थं कथयति– ''उभयाभाव-स्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदभिनवगुप्त-पादाचार्याः'' इति ग्रन्थांशेन।

उभयाभावस्वरूपस्य = उभयस्य –सविकल्पकस्य निर्विकल्पकस्य च। अभावः = निषेधः, उभयस्वरूपत्वम् = उभयात्मकत्वं = सविकल्पकरूपत्वं निर्विकल्पकरूपत्वं च। पूर्ववत् = कार्यज्ञाप्यविचार इव, लोकोत्तरताम् = अलौकिकत्वमेव गमयति = बोधयति। उभयाभावस्वरूपस्य उभयात्मकत्वं तावत् सविकल्पकत्वनिषेधे निर्विकल्पकत्वसिद्ध्या, निर्विकल्पकत्वनिषेधे सविकल्पकत्वसिद्ध्या च संभवति।

अत्र श्रीमदभिनवगुप्तपादाचार्याः इति आदरातिशयप्रकाशनेन इदमेव मतं ग्रन्थकारस्यापि सम्मतम् इति प्रतीयते।

---

**मूलग्रन्थः**

**स च न कार्यः। विभावादिविनाशेऽपि तस्य संभवप्रसङ्गात्। नापि ज्ञाप्यः। सिद्धस्य तस्यासंभवात्। अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्या-मन्यत्क्व दृष्टमिति चेत् – न क्वचिद्दृष्टमित्यलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिकप्रत्यक्षादिप्रमाण-ताटस्थ्यावबोधशालिपरिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसित-**

**परिमितेतरयोगिसंवेदनविलक्षणलोकोत्तर-स्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्। तद्ग्राहकं च प्रमाणं न निर्विकल्पकम्। विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकम्। चर्व्यमाणस्यालौकिकानन्दमयस्य तस्य स्वसंवेदनसिद्धत्वात्। उभया-भावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदभिनवगुप्तपादाः।**

---

**बोधप्रश्नः**

१. रसो न कार्यः। कस्मात्?

२. रसो न ज्ञाप्यः। कस्मात्?

३. कार्योऽपि रसः। कस्मात्?

४. ज्ञाप्योऽपि रसः। कस्मात्?

५. रसग्राहकं न निर्विकल्पकम्। कस्मात्?

६. रसग्राहकं न सविकल्पकम्। कस्मात्?

## १६.५ मिलितेभ्य एव विभावादिभ्यः रसनिष्पत्तिः

रससूत्रे प्रतिपादिताः विभावादयः मिलिता एव रसं निष्पादयन्ति न पृथगवस्थिताः। प्रत्येकं रसेषु पृथगुच्यमानाः विभावादयः अनैकान्तिकतां = व्यभिचारित्वं भजन्ते। व्याघ्रादयो विभावाः भीरूणां भयमिव वीराणामुत्साहम्, अपूर्वदर्शिनां विस्मयम् मृगबन्धूनां क्रोधं च जनयति इति पृथगुक्ताः विभावाः व्यभिचारितां जनयन्ति। एवमेव अनुभावाः व्यभिचारिणश्च पृथगुक्ताः व्यभिचारमेव गमयन्ति। अतः एतेषां मिलितानामेव रसविशेषाभिव्यञ्जकत्वम्। अत एवैते मिलिताः सूत्रे निर्दिष्टाः। एतदुच्यते मम्मटेन- 'व्याघ्रादयो विभावाः' इत्यारभ्य 'मिलिता निर्दिष्टाः' इत्यन्तेन पाठभागेन। तथाहि व्याघ्रादयः भयानकरसस्य विभावाः प्रसिद्धाः। तथैव वीराद्भुतरौद्राणामपि एते व्याघ्रादयः विभावाः भवितुमर्हन्ति। अश्रुपातादयः शृङ्गाररसस्यानुभावाः प्रसिद्धाः। तथा एते करुणभयानकादीनामपि रसानाम् अनुभावाः भवन्त्येव। चिन्तादयः शृङ्गाररसस्य व्यभिचारिणः प्रसिद्धाः। तथैव वीरकरुणभयानकानामपि व्यभि-चारित्वमेतेषां दृश्यते।

एतेषु विभावादिषु कश्चिदेकः कस्यचिदपि एकस्य रसस्य स्वतन्त्रतया निष्पादक इति न वक्तुं शक्यते। यदि व्याघ्रादयः भयानकरसस्यैव निष्पादको भवतीत्युच्यते चेदयमेव रसान्तरेषु दृश्यते इति व्यभिचारप्रसङ्गः। अश्रुपातादीनामनुभावानां चिन्तादीनां व्यभिचारिभावानामपि एषैव स्थितिः। तत्रापि पूर्वोक्तदोषः आपद्यते। तस्माद् विभावः अनुभावः व्यभिचारी वा पृथक् स्वतन्त्रतया कमपि रसं न निष्पादयति। एते विभावानुभावव्यभिचारिणः मिलिता एव तत्तद्रसानां निष्पादका भवन्ति। अत एव रससूत्रे एते मिलिताः निर्दिष्टाः। एतेषां त्रयाणां दण्डचक्रादीनामिव मिलितानामेव हेतुत्वम्। न तु तृणारणिमणिन्यायेन व्यस्तानाम्। एतदेवोक्तमनेन- 'इति पृथगनैकान्तिकत्वात्=व्यभिचारत्वात्, सूत्रे=रससूत्रे मिलिताः=सहिताः, न तु व्यस्ताः निर्दिष्टाः= प्रदर्शिताः।' इति।

### १६.५.१ केवलविभावोदाहरणम्

एते मिलिता एव रसनिष्पादकाः कथिताः। तथापि कुत्रचित् केवलविभाव-वर्णनेन कुत्रचित् केवलानुभाववर्णनेन कुत्रचित् केवलव्यभिचारिवर्णनेन च रसनिष्पत्तिर्वर्णिता

दृश्यते। तत्कथमत्र व्यभिचारः न भवति इति सोदाहरणं प्रदर्शयति आचार्यः।

प्रथमं विभावमात्रस्य वर्णनं यथा ''वियदलिमलिनाम्बुगर्भमेघम्... '' इत्यादिश्लोकः उदाहृतः।

प्रियाय कुपितां नायिकां प्रति तस्याः सख्याः उक्तिरियम्। हे मुग्धे! = विवेकरहिते, त्वं प्रणतिपरे = प्रणामशालिनि दयिते = प्रियतमे इति सति सप्तमी। यदा प्रियतमः प्रणतिपरः तदा। तस्मिन् प्रियतमे प्रसीद = प्रसादं कुरु, प्रसन्ना भव, प्रणयकोपं परित्यज इत्यर्थः। प्रणयकोपत्यागानुकूलाः सामग्रीः वर्णयति। अलिमलिनाम्बुमेघं वियद् = आकाशं कथं भवतीत्युच्यते। अलयः = भ्रमराः, तद्वत् मलिनाः = कृष्णवर्णाः अलिमलिनाः। एवम् अम्बु = जलं गर्भे येषान्ते अम्बुगर्भाः। अलिमलिनाः अम्बुगर्भाश्च मेघा यत्र तम् इति अलिमलिनाम्बुगर्भमेघम्। पुनश्च मधुकरकोकिलकूजितै : मधुकरकोकिलयोः कूजितैः दिशां श्रीः = शोभा वर्धते। तथा धरणिः = भूमिः अभिनवा = नूतना अङ्कुरा एवाङ्के = उत्सङ्गे टङ्काः = पाषाणभेदकास्त्रविशेषाः यस्यां सा। तथा चोर्ध्वम् अधः तिर्यक् च उद्दीपकविभावः कविना वर्णितः। अतः सर्वत्र कामोद्दीपकवस्तूनां सद्भावेन हे मुग्धे त्वं प्रणतिपरे दयिते प्रसीद इत्यर्थः। अत्र दयितमेघादिरूपाणाम् आलम्बनोद्दीपनकारणानां विभावानामेव केवलानां वर्णनं कृतम्। तथापि वर्णितानामेतेषां सौन्दर्यातिशयेन अनुभावानां व्यभिचारिणामपि आक्षेपेण विभावादेः त्रितयचस्यापि समूहालम्बनरूपेण प्रतीतेः न दोषः।

### १६.५.२ केवलानुभावोदाहरणम्

केषुचित्काव्येषु केवलानामनुभावानां वर्णनेनापि रसः अनुभूयमानो दृश्यते। एतादृशेषु स्थलेष्वपि वर्णितानाम् अनुभावानाम् उत्कर्षातिशयेन विभावाः व्यभिचारिणश्च आक्षिप्यन्ते। आक्षिप्ता एते वर्णितेन अनुभावेन मिलित्वा समूहालम्बनरूपेणैव हेतवः भवन्ति। अत्रोदाहरणं प्रदर्श्यते- परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः ... इत्यादिश्लोकः। भवभूतिविरचिते मालतीमाधवे अयं श्लोकः विद्यते। अत्र माधवेन मकरन्दं प्रति विरहातुरायाः मालत्याः अवस्था कथ्यते। तथाहि- तस्याः अङ्गं परिमृदितमृणालीम्लानम् = परिमृदिता = शिथिलीकृता, (करतलद्वयमर्दनेन) या मृणाली = बालमृणालः, तद्वत् म्लानम्। तथा क्रियासु = दिनचर्यासु परिवारप्रार्थनाभिः = परिवारस्यसखी समेतस्य परिवारजनस्य, प्रार्थनाभिः, वारं वारं कथनैः प्रवृत्तिः = बहुवारं कथनेन एकवारं प्रवृत्तिरिति। अपि च तस्याः कपोलः, निष्कलङ्कस्य = कलङ्करहितस्य (कलामात्रशेषत्वात् निष्कलङ्कत्वम्) हिमांशोः = चन्द्रस्य, लक्ष्मीं = शोभां कलयन्ति = धारयन्ति। अत्र कथमपि इति पदात् मालत्याः ग्लान्यालस्यश्रमप्रभृतयः व्यभिचारिणः लक्ष्यन्ते। प्रवृत्तिरङ्गं कपोलः इति पदेभ्यः कस्या अङ्गमिति अपेक्षायाम् आलम्बनविभावोऽपि आक्षिप्यन्ते। एवं श्लोकेऽस्मिन् वर्णितात् अनुभावविशेषात् विभावव्यभिचारिणः आक्षिप्य रसानुभवो जायते।

### १६.५.३ केवलव्यभिचारिभावोदाहरणम्

केवलानां व्यभिचारिभावानां वर्णनमाहात्म्येन विभावानुभावयोराक्षेपे सति रसानुभवो जायते। एतस्योदाहरणं भवति ''दूरादुत्सुकमागते विवलितम्...'' इत्यादिश्लोकः। अमरुशतके वर्ततेऽयं श्लोकः। अत्र मानिनीप्रसादनात् निवृत्तस्य नायकस्य पुनरागमनेन उत्पन्नभावायाः चक्षुःक्रियाः वर्ण्यन्ते। अहो जातागसि प्रेयसि मानिन्याः चक्षुः प्रपञ्चचतुरं जातम् इति प्रधानवाक्यं भवति। तच्चातुर्यं कथमिति श्लोकस्य त्रिषु चरणेषु वर्ण्यते। अहो इति विस्मयार्थे प्रयुक्तोऽस्ति। जातागसि प्रेयसि = यदा प्रियतमः कृतापराधः अभवत् तदा मानिन्याः = प्रणयकुपितायाः नायिकायाः चक्षुः, प्रपञ्चे = विचित्रव्यापारे चतुरं = कुशलं जातम् इत्यर्थः।

व्यापारप्रपञ्चमाह-दूरादुत्सुकमागते इत्यादि। दूरतः प्रियतमं यदा अपश्यत् तदा उत्सुकम् = इतोऽन्यत्र वा गच्छतीत्युत्कण्ठासूचकचेष्टाविशेषशालि (चक्षुः) आगते = प्राप्ते सति, विवलितम् = लज्जया सङ्कुचितम्, सम्भाषिणि = यदा प्रियतमः सम्यक् भाषितवान् तदा तस्याः चक्षुः स्फारितम् = हर्षोदयात् विकसितम्। संश्लिष्यति = आलिङ्गनेच्छया यदा समीपमागच्छति तदा अरुणम् = क्रोधोदयाद् आरक्तम्, गृहीतवसने = यदा चेलाञ्चलं गृहीतवान् तदा, अञ्चितभ्रूलतम् = अञ्चिता = कुटिलीकृता भ्रूलता येन तथाभूतम्, चरणानतिव्यतिकरे = चरणयोः आनतिः चरणानतिः, तस्य व्यतिकरः = समूहः, तथाभूते प्रियतमे सति, बाष्पाम्बुपूर्णेक्षणं = बाष्पाम्बुना = अश्रुजलेन पूर्णमीक्षणं चक्षुः च जातमित्यर्थः।

अत्र केवलानाम् औत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां व्यभिचारिणां स्थितिः अस्ति। तथापि अस्मिन् श्लोके वर्णितस्य व्यभिचारिसमूहस्य उत्कर्षातिशयेन विभावानुभावा अपि आक्षिप्यन्ते।

केवलानां विभावादीनां रसप्रकाशकत्वं नास्तीत्युच्यते- ''यद्यपि नानैकान्तिकत्वमिति। अन्यतमद्वयाक्षेपकत्वे = अन्यतमेषु विभावादिषु द्वयस्य = यदि विभावस्य स्थितिः तर्हि अनुभावव्यभिचारिणोः, यदि अनुभावस्य स्थितिः तर्हि विभावव्यभिचारिणोः यदि व्यभिचारिणः स्थितिः तर्हि विभावानुभावयोः आक्षेपकत्वे = प्रत्यायकत्वे न अनैकान्तिकत्वं = न व्यभिचारः। तथा च मिलितानां तेषां विभावादीनां'' रसनिष्पत्तिहेतुत्वं, यत्र चैक एव निर्दिष्टस्तत्र तेनैव अन्ययोः द्वयोः आक्षेपेण रसनिष्पत्तिरिति सिद्धान्तः।

---

**मूलग्रन्थः**

**व्याघ्रादयो विभावाः भयानकस्येव वीराद्भुतरौद्राणाम्, अश्रुपातदयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः।**

**वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः।**
**धरणिरभिनवाङ्कुराङ्कटंका प्रणतिपरे दयिते प्रसीद मुग्धे॥ २७ ॥**
**इत्यादौ,**
**परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः**
**कथमपि परिवारप्रार्थनाभिः क्रियासु।**
**कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-**
**मभिनवकरिदन्तच्छेदकान्तः कपोलः॥ २८॥**

**इत्यादौ**
**दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं**
**संश्लिष्यत्यरुणं गृहीतवसने किञ्चाञ्चितभ्रूलतम्।**
**मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं**
**चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि॥ २९॥**

**इत्यादौ च - यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां च व्यभिचारिणां केवलानामेवास्ति स्थितिः तथाप्येषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति।**

---

**बोधप्रश्नः**

१. विभावादीनां पृथक् रसाभिव्यक्तिरिति पक्षे अनैकान्तिकत्वं कथं जायते?

२. केवलविभावप्रतिपादनेन रसाभिव्यक्तिः कथं भवति ?

३. केवलानुभावप्रतिपादनेन रसाभिव्यक्तिः कथं भवति ?

४. केवलव्यभिचारिप्रतिपादनेन रसाभिव्यक्तिः कथं भवति ?

## १६.६ सारांशः

अस्मिन् पाठे अभिनवगुप्ताभिमतं रससूत्रव्याख्यानं भवानपठत्। पूर्वस्मिन् पाठे भट्टलोल्लटश्रीशङ्कुकभट्टनायकानां विचारानुसारेण रससूत्रं कथं व्याख्यायते इत्यपि भवानधीतवान्। अभिनवगुप्ताचार्येण पूर्वाचार्याणां रससूत्रव्याख्यासु केचन दोषा अपि उद्भाविताः। रस उत्पद्यते इति रसस्य कार्यत्वं यत् लोल्लटेनोक्तं तदयुक्तम्। पूर्वं तस्याभावप्रसङ्गात्। उत्पत्तेः पूर्वं रतिभावश्चेत् तस्य स्वशब्दवाच्यत्वं दोषः। अपि च उपचितो रतिभावः रसः इत्यपि न भवति। हास्यादेः रसस्य कथितानां षडादीनां भेदानामनुपपत्तेः। मुख्यतया रामादावनुकार्ये रसः इति लोल्लटसिद्धान्तः। सामाजिके रससद्भावः अनेन नोक्तः इत्यपि न्यूनता अस्ति।

श्रीशङ्कुकस्य अनुमितिसिद्धान्तोऽपि न स्वीकार्यः। अनुमितिज्ञानं परोक्षं भवति। रसस्य साक्षादनुभवः सामाजिकानां वर्तते। अनुकार्यगतरत्याद्यनुकरणरूपो रस इति शङ्कुकमतमपि न हृदयङ्गमम्। रत्यादिका भावा अन्तःकरणवृत्तयः भवन्ति। अनुकरणन्तावद् बाह्यक्रिया भवति। रामादिगतायाः रतेः ज्ञाता इदानीं कोऽपि नास्ति। अतः रामानुकारो नट इत्यपि पक्षः न शोभते।

भट्टनायकस्तु सामाजिकानां वासनात्मतया स्थितो रत्यादिरेव भुज्यमानो रसः इति वदति। तथापि भावकत्वभोजकत्वयोः नूतनयोः व्यापारयोः स्वीकारः अनेन कृतः। एष च अनपेक्षित इव भाति। एतेन विनापि रसः भट्टाभिनवगुप्तेन व्याख्यातः अस्ति। एवं त्रयाणामप्याचार्याणां रसव्याख्यानेषु आपत्तिं प्रदर्श्य स्थापितं भट्टाभिनवगुप्ताभिमतं रससूत्रव्याख्यानमपि भवता अधीतमेव। साधारण्येन प्रतीतैः विभावानुभावव्यभिचारिभिः व्यङ्ग्यव्यञ्जकभावेन अभिव्यक्तः रत्यादिकः स्थायिभावः रसो भवति। एष च रसः वेद्यान्तरसंस्पर्शशून्येन प्रमात्रा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतो भवति। रसोऽयं विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणो भवति।

विभावादिविनाशेऽपि रसस्य संभवप्रसङ्गात् रसो न कार्यः। अयं विभावादि-जीवितावधिर्भवति। विभावादेः कारणात् पूर्वं रसस्य असंभवात् अयं ज्ञाप्योऽपि नास्ति। चर्वणानिष्पत्त्या रसो निष्पद्यते इति रसः कार्योऽपि भवितुं शक्यते। लोके प्रसिद्धेभ्यः त्रिविधेभ्यः अपि ज्ञानेभ्यः विलक्षणोऽयं लोकोत्तरसंवेदनगोचर इति ज्ञाप्योऽपि भवितुं शक्यते। रसास्वादे विभावादिपरामर्शप्रधानत्वाद् रसग्राहकं न निर्विकल्पकं ज्ञानम्। चर्व्यमाणस्यालौकिकानन्दमयस्य अस्य स्वसंवेदनसिद्धत्वात् न सविकल्पकम्। उभयाभावस्वरूपत्वादिदम् उभयात्मकमपि वक्तुं शक्यते इति रसस्य अलौकिकत्वं निर्विवादसिद्धम्।

रसनिष्पत्तौ विभावादयः मिलिताः एव कारणम्। न तु व्यस्ताः। केवलस्य विभावस्य अनुभावस्य व्यभिचारिणो वा भयानकस्येव वीराद्भुतरौद्राणामपि कारणं भवति। अतः एते पृथक् एकस्य रसस्य कारणमुच्यन्ते चेत् अपरत्र रसे वीरादौ व्यभिचरन्ति इति दोषः। एवमेव अनुभावाः व्यभिचारिणश्च पृथगनैकान्तिकाः भवन्ति। तथा च मिलितानामेव विभावानुभाव्यभिचारिणां रसनिष्पत्तिहेतुत्वम्। यत्र चैक एव निर्दिष्टः तत्रापि तेनैवान्ययोः द्वयोराक्षेपेण रसनिष्पत्तिरिति अभिनवगुप्तस्य सिद्धान्तः। अयमेवास्य पाठस्य सारांशः।

## १६.७ शब्दावली

| | | | |
|---|---|---|---|
| १. | विभावनादिव्यापारः | - | अयमेव साधारणीकरणमुच्यते। अनेन व्यापारेण सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितिः। स्थाय्यनुभावादीनाञ्च सम्बन्धिविशेषानवच्छिन्नत्वेनोपस्थितिः। सीतादयः स्वप्रियतमाभिन्नत्वरूपेण विशेषेण भाव्यन्ते अनेन इति विभावनम्। ततः पश्चात् भ्रूक्षेपादयः स्वात्मवृत्तितया भाव्यन्तेऽनेन इत्यनुभावनम्। एवं स्वीयरत्याद्यनुकूलतारूपेण विशेषेण अभितश्चार्यन्तेऽनेनेति व्यभिचारणम्। |
| २. | स्वाकारवादः | - | योगाचारबौद्धाः बाह्यं पदार्थजातं ज्ञानविषयत्वेन न स्वीकुर्वन्ति। घटपटादितुल्याः ज्ञानस्यैव आकारविशेषाः ज्ञानेन विषयीक्रियन्ते इति ते वदन्ति। अयमेव स्वाकारवादः। |
| ३. | पानकरसन्यायः | - | पानकरसः एलामरीचशर्कराकर्पूरादिविलक्षणैः वस्तुभिः सम्पाद्यते। एलादिस्ववैलक्षण्येन समुदायसम्मेलनसम्पादितेन विलक्षणेनास्वादेनास्वाद्यते। तथा विभावादिवैलक्षण्येन लोकातीतास्वादेन आस्वाद्यमानो रस उच्यते। |
| ४. | चमत्कारः | - | भुञ्जानस्य अद्भुतभोगस्पन्दाविष्टस्य च मनःकरणं चमत्कारः इति अभिनवभारत्याम् अभिनवगुप्तः। |
| ५. | कार्यः | - | कारकहेतोर्जातः कार्यः। कस्यापि पदार्थस्य उत्पत्तौ कारणं कारकहेतुर्भवति। |
| ६. | ज्ञाप्यः | - | उत्पन्नस्य पदार्थस्य कुतश्चित् प्रतिबन्धाद् अप्रकाशमानस्य प्रकाशतापादकं कारणं ज्ञापकं भवति। ज्ञापकहेतोः जातः ज्ञाप्यः भवति। |
| ७. | निर्विकल्पकम् | - | नामरूपजात्यादिविकल्प (विशेष) शून्यं ज्ञानं निर्विकल्पकं भवति। |
| ८. | सविकल्पकम् | - | नामरूपजात्यादिविकल्पसहितं ज्ञानम् सविकल्पकं भवति। |

## १६.८ सन्दर्भग्रन्थः

| | | | |
|---|---|---|---|
| १. | काव्यप्रकाशः | - | संकेतव्याख्यासहितः आनन्दाश्रमप्रकाशनम् १९२१ ई. |
| २. | काव्यप्रकाशः | - | झलकीकरवामनः भंडारकर इन्स्टिट्यूट् पूणे १९६५ ई. |

३. काव्यप्रकाशः आदर्शव्याख्यासहितः

– परिमलप्रकाशनम् देहली १९८५ ई.

४. काव्यप्रकाशः साहित्यचूडामणि

– सुधासागरसहितः काशी विश्वविद्यालयः १९८१ ई.

## १६.९ सहायकग्रन्थः

१. नाट्यशास्त्रम् – अभिनवभारतीसहितम् – भरतमुनिः

२. व्यक्तिविवेकः – महिमभट्टः

## १६.१०बोधप्रश्नोत्तराणि

(१६.३)

१. अनुकार्ये एव रसः। न तु सामाजिके कथमपि इति भट्टलोल्लटस्य रससूत्रव्याख्याने प्रमुखः दोषः।

२. भरतमुनिना हास्यरसस्य स्मितहसितादयः षड्भेदाः स्वीक्रियन्ते। यदि उपचित एव रसः तर्हि एतेषु अन्यतमस्य एव रसत्वम् उपपन्नम् भविष्यति। न तु ततः पूर्वेषां भेदानाम्।

३. किञ्चिद्धि प्रमाणेनोपलब्धमेव अनुकरणमिति वक्तुं शक्यते। अत्र अनुकार्यमनुकर्तुं किमपि प्रमाणं नास्ति। अतः अनुकरणरूपो रसः इत्यपि वक्तुं नैव शक्यते।

४. अनुमीयमानं ज्ञानं परोक्षं भवति। रसश्च प्रत्यक्षमनुभूयते। अतः अनुमीयमानो रसः इति नैव स्वक्रियते।

५. भट्टनायकेन भावकत्वभोजकत्वाख्यं व्यापारद्वयं नूतनतया स्वीकृतमस्तीति प्रमुखो दोषः। एतद्विनाऽपि रसं व्याख्यातुं शक्यते इति अभिनवगुप्तः।

६. अभिनवगुप्तमतेन संयोगपदस्य व्यङ्ग्यव्यञ्जकभावसंबंन्धः अर्थः। निष्पत्तिश्च अभिव्यक्तिरिति।

(१६.४)

१. कार्यः पदार्थः कारकहेतोः विनाशेऽपि तिष्ठति। यथा दण्डादिनाशेऽपि घटस्योपस्थितिः। विभावादिनाशे रसस्योपस्थितिर्नास्ति। रसः विभावादिजीवितावधिर्भवति। अतः रसः कार्यो न भवति।

२. पूर्वं सिद्धं वस्तु एव ज्ञाप्यं भवति। रसः विभावादेः पूर्वं सिद्धः नास्ति। अतः रसः ज्ञाप्यो नास्ति।

३. लोके प्रसिद्धेभ्यः त्रिविधेभ्यः ज्ञानेभ्यः विलक्षणं भवति रसग्राहकं ज्ञानम्। तच्च लोकोत्तरस्वसंवेदनगोचरो भवतीति प्रत्येयोऽपि (ज्ञाप्योऽपि) भवति।

५. विभावादिपरामर्शप्रधानं भवति रसग्राहकं ज्ञानम्। तेन चेदं निर्विकल्पकं नास्ति। नामरूपजात्यादिविशेषणरहितानामेव निर्विकल्पकत्वात्।

६. चर्व्यमाणस्य अलौकिकानन्दस्य स्वसंवेदनमात्रगोचरत्वात् नामरूपादिविशेषाभावात् रसग्राहकं निर्विकल्पमपि भवेत्।

१. व्याघ्रादयः विभावाः यथा एकस्य भयानकस्य कारणं भवति तथैव वीररौद्रभयानकानामपि कारणं भवितुमर्हन्ति इति अनैकान्तिकत्वम्।

२. केवलविभावप्रतिपादनेन अन्ययोः अनुभावव्यभिचारिणो आक्षेपेण त्रयः मिलित्वा रसाभिव्यक्तौ कारणं भवति।

३. केवलानुभावप्रतिपादनेन अन्ययोः विभावव्यभिचारिणोः आक्षेपेण त्रयः मिलित्वा रसाभिव्यक्तौ कारणं भवति।

४. केवलव्यभिचारिप्रतिपादनेन अन्ययोः विभावानुभावयोः आक्षेपेण त्रयः मिलित्वा रसाभिव्यक्तौ कारणं भवति।

## १६.११अभ्यासप्रश्नाः

१. भट्टलोल्लटश्रीशङ्कुकभट्टनायकानां मतेषु अरुचिं प्रदर्श्य भट्टाभिनवगुप्ताभिमतं रससूत्रव्याख्यानं स्ववाक्यैः संक्षिपतु।

२. रसस्य अलौकिकत्वम् अभिनवगुप्तानुसारेण सम्यक् प्रतिपादयतु।

३. मिलितेभ्यः एव विभावादिभ्यः रसनिष्पत्तिरिति काव्यप्रकाशकारानुरोधेन स्पष्टयतु।

---◆---

# सप्तदशः पाठः ( रसभेदाः )

## पाठसंरचना



## १७.१ प्रस्तावना

अस्मिन् पाठे भवतः स्वागतम्। पूर्वस्मिन् पाठे रससूत्रस्य अभिनवगुप्ताभिमतं व्याख्यानं विस्तरेण भवान् अपठत्। साधारण्येन प्रतीतैः विभावादिभिः अभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी, तेनैव सामाजिकेन स्वाकार इवाभिन्नोऽपि गोचरीकृतः चर्व्यमाणतैकप्राणः पानकरसन्यायेन चर्व्यमाणो रसो भवति। अयं च रसः केवलानन्दैकस्वरूपः। अतः अनुभूतिदशायाम् अस्मिन् रसे भेदाः न संभवन्ति। निर्विशेषोऽपि अयं रसः स्थायिनां चित्तवृत्तीनां विशेषैः विशिष्टाः कथ्यन्ते। अस्मिन् पाठे चर्व्यमाणस्य अलौकिकानन्दमयस्य अस्य रसस्य विशेषान् भवान् सोदाहरणं पठिष्यति। भेदानामेतेषां स्थायिनश्च के इत्यपि भवान् अधिगमिष्यति। निर्वेदादीनां व्यभिचारिभावानामपि परिचयः अस्मिन्नेव पाठे भवान् पठिष्यति।

## १७.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवान्-

- रसविशेषानधिगमिष्यति।

- शृङ्गारादीनां रसानाम् उदाहरणानि प्रदर्श्य तेषु विभावादिसंयोजनसामर्थ्यं चाधिगमिष्यति।
- स्थायिभावानां स्वरूपमधिगमिष्यति।
- व्यभिचारिभावानां स्वरूपमधिगमिष्यति।
- शान्तरसस्वरूपमधिगमिष्यति।
- ''शृङ्गारहास्य...'' इत्यत आरभ्य ''शिवशिवेति प्रलपतः।'' इत्यन्तस्य पाठ्यांशस्य पङ्क्तिज्ञानमधिगमिष्यति।

## १७.३ अष्टौ नाट्ये रसाः

भरतमुनेः नाट्शास्त्रे रसस्य स्वरूपमुक्त्वा तस्य भेदा अपि निरूपिताः सन्ति। काव्यप्रकाशे मम्मटाचार्योऽपि विषयेऽस्मिन् भरतमुनिमेवानुसरति। भरतेन नाट्ये अष्टौ रसाः स्वीकृताः। मम्मटेनापि एते एव अष्टौ रसाः स्वीकृताः। शृङ्गारः, हास्यः, करुणः, वीरः रौद्रः, भयानकः, बीभत्सः, अद्भुतः इति अष्टौ रसाः।

''शृङ्गारहास्यकरुण ...'' इत्यादिकारिकापि मम्मटेन भरतमुनेः नाट्यशास्त्रात् तेनैव रूपेण स्वीकृता अस्ति। नाट्ये अष्टौ एव रसाः स्मृताः इत्यनेन काव्ये अन्येऽपि रसाः भवितुमर्हन्ति इति अर्थः। मम्मटाचार्यः शान्तरसमपि काव्ये अङ्गीकरोति।

### १७.३.१ शृङ्गारः

रसानां नामानि उक्त्वा तेषां भेदान् उदाहरणानि च वक्तुमारभते - ''तत्र शृङ्गरस्य द्वौ भेदौ...'' इति। शृङ्गाररसः द्विविधः भवति। संभोगशृङ्गारः विप्रलम्भशृङ्गारश्चेति।

संयुक्ताभ्यां भुज्यते इति संभोगः। अत्र नायिकानायकौ संयुक्तौ रसमुपभुङ्क्तः। संयोगास्वादलोभेन वियुक्ताभ्यां प्रलभ्यते आत्मा अत्रेति विप्रलम्भः। तत्र संभोगशृङ्गारस्य एक एव भेदः गण्यते। परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनेकभेदाः अस्य सन्ति। अत्र अयम् अपरिच्छेद्यो भवति। तेनैव कारणेन अस्य एक एव भेदः।

### ➢ संभोगशृङ्गारः

रसानाम् उदाहरणप्रदर्शनक्रमे प्रथमं शृङ्गाररसस्य तत्रापि संभोग-शृङ्गारस्य उदाहरणं प्रथमं प्रदर्श्यते। तद्यथा- ''शून्यं वासगृहं विलोक्य शयनाद्...'' इत्यादि-श्लोकः। अमरुकशतके अयं श्लोकः दृश्यते। अस्मिन् नवोढायाः अभिनवसमागमः वर्णितः।

शून्यं वासगृहं विलोक्य शयनात् शनैः किञ्चिद् उत्थाय, निद्राव्याजमुपागतस्य पत्युः मुखं सुचिरं निर्वर्ण्य विस्रब्धं परिचुम्ब्य, गण्डस्थलीं जातपुलकाम् आलोक्य लज्जानम्रमुखी बाला हसता प्रियेण चिरं चुम्बिता इत्यन्वयः।

शून्यं = निर्जनं, वासगृहं = शयनागारं विलोक्य विशेषेण दृष्ट्वा शयनात् शनैः = मन्दम् उत्थाय व्याजनिद्रां प्राप्तस्य पत्युः मुखं सुचिरं = निःशेषं वर्णयित्वा, विस्रब्धं =विश्वासेन, परिचुम्ब्य = परितः कपोलयोः भाले नयनयोः च चुम्बयित्वा, गण्डस्थलीं जातपुलकाम् = रोमाञ्चिताम् आलोक्य लज्जानम्रमुखी बाला = नवोढात्वेन अप्रगल्भा चिरं = लज्जापगमः सम्भोगस्वीकारश्च यावत् चुम्बिता इति श्लोकार्थः।

अत्र च नायकः आलम्बनविभावः। शून्यगृहनायकनिद्रादिः उद्दीपनविभावः। मुखनिर्वर्णनचुम्बनादिः अनुभावः लज्जाहासव्यङ्ग्यहर्षादिः व्यभिचारिभावः। रतिश्च स्थायिभावः। सामाजिके नायिकानिष्ठस्यैव रसस्य निष्पत्तिः।

संभोगशृङ्गारस्यैव द्वितीयमुदाहरणं प्रदर्शयति - ''त्वं मुग्धाक्षि...'' इत्यादि- श्लोकः। अयमपि श्लोकः अमरुकशतकस्यैव। कुचोपपीडं परिरभ्य रन्तुकामस्य आलिङ्गनव्यवधायिकां कञ्चुलिकां मोचयितुं प्रवृत्तस्य नायकस्य वर्णनमस्मिन् श्लोके कविना कृतमस्ति।

हे मुग्धाक्षि! = सुन्दरनयने, त्वं कञ्चुलिकया विनैव मनोहारिणीं = चित्ताकर्षणशीलां लक्ष्मीं =शोभां, धत्से = धारयसि इत्येवं प्रकारेण अभिधायिनि = आभाषमाणे प्रियतमे तद्वीटिकासंस्पृशि = तस्याः वीटिकां = ग्रन्थिं संस्पृशि = स्पृशति सति, शय्यायाः उपान्ते - समीपे निविष्टा = गूढोपविष्टा सस्मिता = ईषत् सञ्जातहासा च सखी, तस्याः नेत्रयोः उत्सवः = उत्फुल्लता, तेनैव आनन्दितः = सञ्जातानन्दः आलीजनः = सखीजनः अलीकानां = मिथ्याभूतानां शुको मया पाठनीयः इत्यादिवचनोपन्यासपूर्वकम् शनकैः मन्दं, निर्यातः = शयनगृहात् बहिर्गतः इति श्लोकार्थः। अत्र मुग्धाक्षी आलम्बनम्। नायकसौन्दर्याङ्गशो-भादि उद्दीपनम्। आभाषणवीटिकास्पर्शौ अनुभावौ उत्कण्ठादयो व्यभिचारिणः। रतिः स्थायिभावः। सामाजिके च नायकनिष्ठरतिविषयकरसनिष्पत्तिः। पूर्वस्मिन् श्लोके नायिकानिष्ठा रतिः अस्मिन् च नायकनिष्ठा रतिः आस्वादविषयो भवतीति अनयोः भेदः।

### ➢ विप्रलम्भशृङ्गारः

सम्भोगशृङ्गारादपरः विप्रलम्भशृङ्गारः। स च पञ्चविधः अस्ति। अभिलाषविप्रलम्भः, विरहविप्रलम्भः, ईर्ष्याविप्रलम्भः, प्रवासविप्रलम्भः, शापविप्रलम्भश्चेति।

अभिलाषहेतोः अनादिसङ्गमाभावः अभिलाषविप्रलम्भः आद्यः। तस्योदाहरणं ''प्रेमाद्राः प्रणयस्पृशः...'' इत्यादिश्लोकः। मालतीमाधवे मालतीप्राप्त्यभिलाष-साधनस्य श्मशानसाधने प्रवृत्तस्य माधवस्योक्तिरियम् भवति।

मुग्धदृशो मालत्याः तास्ताः = अनुभूतप्रायाः प्रसिद्धाः चेष्टाः दर्शनहर्षादिका मयि पुनर्भवेयुः इति मुख्यवाक्यार्थः। कीदृश्यः चेष्टाः इत्युच्यन्ते- प्रेम्णा = अयं मम, अहमस्य इति भावः प्रेम, तेन आद्राः तथा प्रणयस्पृशः प्रणयेनाविचलितं स्पृशन्तीति प्रणययुक्ताः। तथा उद्गाढरागोदयाः = उद्गाढः = स्थिरीकृतः। गुर्वादिपारतन्त्र्यराहित्येनेत्यर्थः रागोदयः = रागस्य उदयः = उपचयो यासु ताः चेष्टाः। तथा निसर्गेण = स्वभावेन मधुरा = मनोहरा चेष्टाः। अपि च यासु चेष्टासु आसंशया = मनोरथेन, परिकल्पितास्वपि = रचितास्वपि क्षणाद् = क्षणपर्यन्तम्। बाह्यकरणस्य = चक्षुरादेः बाह्येन्द्रियस्य व्यापारं रुणद्धि = अवरोधयति इति = बाह्यकरणव्यापाररोधि तादृशः अन्तःकरणस्य = मनसः आनन्देन सान्द्रः = निबिडः = लयः तन्मयत्वं भवतीत्यर्थः।

अत्र मालती आलम्बनम्। तद्विलासस्मरणमुद्दीपनम्। आसंशा अनुभावः। तद्व्यङ्ग्या उत्कण्ठा व्यभिचारिभावः। रतिश्च स्थायिभावः। तस्य ज्ञाता सामाजिकः नायकनिष्ठं रतिविषयकं रसमनुभवति।

द्वितीयस्तु विरहविप्रलम्भः। अनुरागाभावाद् दैवप्रतिबन्धाद् लज्जादिवशाच्च असंयोगः विरहः। तद्हेतुकः विप्रलम्भः विरहविप्रलम्भः। तस्योदाहरणं यथा -

''अन्यत्र व्रजतीति का खलु'' इत्यादिश्लोकः। कृतसङ्केतः नायकः रात्रौ समये नागच्छति। तेन च विरहोत्कठितायाः नायिकायाः वितर्कवर्णनमस्मिन् श्लोके दृश्यते। इत्यल्पेतरकल्पनाकवलितस्वान्ता बाला निशान्तान्तरे निशि निद्रां नाप्नोति इति मुख्यं वाक्यम्। इति = पूर्वोक्तैः प्रकारैः, अल्पेतराभिः = बह्वीभिः कल्पनाभिः = वितर्कैः कवलितं = व्याप्तं स्वान्तं = मनो यस्याः तथाभूता नायिका निशान्तस्य शयनगृहस्य अन्तरे = मध्ये व्याप्ता सती निशि = रात्रौ निद्रां न लेभे। अत्र कल्पनाप्रकारमाह - मम नायकः अन्यत्र = नायिकान्तरसमीपं व्रजति = गच्छतीति कथापि का =कुत्सिता खलु। नापि अस्य = मम नायकस्य तादृक् = अन्यत्र प्रेषणशीलः सुहृदपि = मित्रमपि नास्ति। यो मां नेच्छति इति काक्वा सः माम् इच्छत्येवेत्यर्थः। इच्छन्नपि नागतः। अत्र हहहा इति नायकस्य अनागमनम् महतः विस्मयस्य कारणमिति प्रकाशयति। अयम् = नानुभूतपूर्वः विधेः = दैवस्य कः = कीदृशः प्रक्रमः = आरम्भः इत्येवं प्रकाराः विकल्पाः तस्याः मनसि आगताः। एते विकल्पाः निद्राभावस्य कारणम् इत्यर्थः।

अत्र अनागतः पतिः आलम्बनविभावः। अनागमनादिरुद्दीपन-विभावः। वितर्कनादरिनुभावः। हहहेति सूचितः विस्मयः व्यभिचारिभावः। नायिकायाः रतिश्च स्थायी।

ईर्ष्याविप्रलम्भः तृतीयो भेदः। प्रणयकोपजन्या ईर्ष्या अत्र कारणं विप्रलम्भस्य। ''सा पत्युः प्रथमापराधसमये...'' इत्याद्युदाहरणम्। स्वप्रेयस्याः नवोढायाः दुःखमसहमाना काचित् अन्यां प्रति वदति। सा बाला = अप्रौढा पत्युः प्रथमापराधस्य = प्रथमस्य अपराधस्य समये। पत्युः अन्याङ्गनासङ्गमरूपः अपराधः अत्र विवक्षितः। एवमपराधं कृत्वा आगतं पतिं दृष्ट्वा सख्योपदेशं विना = अस्मिन् समये किं करणीयमिति सख्याः उपदेशं विना सविभ्रमं = विलाससहितं यथा तथा अङ्गस्य भ्रुकुट्यादेः वलना = चालनं वक्रीकरणं, याश्च वक्रोक्तयः = गूढार्थप्रयुक्तानि वाक्यानि, तैः संसूचनं = स्वस्य मानस्य प्रणयकोपस्य प्रकाशनं नो जानाति। किन्तु तदा स्वच्छैः = निर्मलैः, अच्छकपोलयोः = निर्मलगण्डयोः मूलेन गलितैः = पतितैः अश्रुभिः पर्यस्ते = परितः क्षिप्ते नेत्रोत्पले = नयनकमले यथा तथाभूता सती लुठन्तः = विप्रकीर्णाः, लोलाः = चञ्चला ये अलकाः केशपाशाः तैः उपलक्षिता सती केवलं रोदिति। अप्रौढात्वात् प्रियतमस्य प्रथमापराधसमये अन्यत् किमपि कर्तुमसमर्था बाला केवलं रोदिति इत्यर्थः।

अत्र पतिरालम्बनविभावः। अपराधः उद्दीपनविभावः। रोदनाद्यनुभावः। तद्व्यङ्ग्या असूया व्यभिचारिभावः। नायिकानिष्ठा रतिश्च स्थायी।

प्रवासहेतुकः विप्रलम्भः चतुर्थः। प्रवासो नाम विभिन्नदेशस्थितिः। 'प्रस्थानं वलयैः कृतं...' इत्यादिश्लोकः उदाहरणम्। यस्याः पतिः दूरदेशे वसति सा स्वजीवितं सम्बोध्य वदति। हे जीवित = प्राण! प्रियतमे यातुं निश्चिते = यदा प्रियतमः दूरदेशं गन्तुं निश्चितवान् तदा, सर्वे तव सुहृदः प्रियतमेन सह प्रस्थिताः = प्रचलिताः। तदा हे जीवित! तवापि प्रियतमेन सह गन्तव्यमासीत्। पुनः कथं त्वया प्रियसुहृत्सार्थः = प्रियस्य सुहृदां च सार्थः = समूहः त्यज्यते इति। के ते सुहृदः ये प्रियतमेन सह प्रस्थिता इत्युच्यन्ते - वलयैः = कङ्कणैः प्रस्थानं कृतम्। प्रियतमगमनवार्तां श्रुत्वा कार्श्येन वलयभ्रंशः। प्रियसखैः = प्रीतिपात्रैः अस्रैः = अश्रुभिः अजस्रं = निरन्तरं गतं = नयनाभ्यां निर्गतम्। धृत्या = धैर्येण तद्गमनानन्तरं क्षणमपि नासितम् = न स्थितम्। चित्तेन = मनसापि पुरः = पूर्वमेव गन्तुं व्यवसितं = निश्चितम्। अस्रादीनां हृदयस्थितत्वेन प्रियसखत्वम्। अत्र प्रियतमः आलम्बनविभावः। तत्प्रयाणमुद्दीपनविभावः। कार्श्यादयोऽनुभावाः। नायिकानिष्ठरतिविषयकरसनिष्पत्तिश्च सामाजिके भवति।

शापहेतुकः विप्रलम्भः मेघदूते प्रसिद्धः। ततः एव ''त्वामालिख्य प्रणयकुपिताम्'' इत्यादिः प्रसिद्धः श्लोकः अत्र उदाहरणरूपेण प्रदत्तः अस्ति।

हे प्रिये! प्रणयेन कुपितां = प्रणयकुपितां त्वां = तव चित्रं धातुरागैः = शिलाञ्जनैः शिलायाम् अलिख्य = निर्माय आत्मानं = मां ते = तव चित्रगतायाः चरणपतितं कर्तुं = लिखितुं यावदिच्छामि तावदेव मुहुरुपचितैः = पुनः पुनः प्रवृद्धैः अस्रैः = अश्रुभिः मम दृष्टिः = दर्शनं, आलुप्यते = आव्रियते। क्रूरः कृतान्तः = विधिः तस्मिन्नपि = चित्रेऽपि नौ = आवयोः सङ्गमं न सहसे इत्यर्थः।

अत्र यक्षस्य नायिका आलम्बनम्। तत्प्रणयकोपः उद्दीपनम्। चरणपातेच्छादिरनुभावः। कृतान्तेऽसूया व्यभिचारिभावः। नायकनिष्ठरतिविषयकरसनिष्पत्तिः सामाजिके च।

### १७.३.२ हास्यः

एवं शृङ्गारभेदानाम् उदाहरणानि प्रदर्श्य इदानीं हास्यरसम् उदाहरति- 'आकुञ्च्य पाणिमशुचिम्...' इत्यादिश्लोकः। विष्णुशर्माणम् उपहसतः उक्तिरियम्। मन्त्राम्भसां = मन्त्रेण पवित्रितानां जलानां पृषतैः = बिन्दुभिः प्रतिपदं पवित्रिते = कृतसंस्कारे मम मूर्धनि वेश्या अशुचिम् = अपवित्रम्, पाणिं = हस्तम् आकुञ्च्य = सङ्कुचितं कृत्वा तारो = दीर्घः स्वनः = शब्दः यत्र तादृशं प्रहारम् दत्तवती, हाहा हतोऽहमिति शब्दमुच्चार्य विष्णुशर्मा नाम विप्रः रोदिति इत्यर्थः।

अत्र विष्णुशर्मा आलम्बनविभावः। रोदनमुद्दीपनविभावः। स्मितातिहसितरुदितादयः अनुभावाः। द्रष्टुः आवेगचापलादयो व्यभिचारिणः। हासः स्थायीभावः। सामाजिके च नायकनिष्ठहासविषयकरसनिष्पत्तिः।

### १७.३.३ करुणः

करुणरसस्योदाहरणमाह - 'हा मातस्त्वरितासि...' इत्यादिना श्लोकेन। राजपत्नीमरणे तत्परिजनविलापोक्तिरियम्। पौराङ्गनानाम् इत्थम् = एवं प्रकाराः गिरः घर्घराः = उच्चैः रोदनाद् घर्घरस्वनाः मध्ये = अन्तराले रुद्धाः = विच्छिन्नाः च करुणाः सस्नेहाः सत्यः चित्रस्थानपि = आलेख्यगतानपि। अपिशब्देन सचेतनान् तु रोदयन्त्येव इति। भित्तीरपि शतधा = शतखण्डाः कुर्वन्ति। किंप्रकाराः एते इत्याह -

हा इति विषादे, भो मातः! कुत्र गन्तुं त्वरिता असि? किमिदम् आकस्मिकोत्पातरूपम्। देवताः हा धिक्। देवतानाम् आराधनमपि विफलं जातमिति। क्व आशिषः = संतुष्टानां ब्राह्मणानाम् आशिषः अपि कुत्र गताः? अस्माकं प्राणानामपि धिक्। यतो हि त्वन्मरणे अपि अस्माकं प्राणाः तिष्ठन्ति। ते = तव अङ्गेषु अशनिः = वज्ररूपो हुतवहः - अग्निः पतितः। दृशौ नेत्रे अस्माकं दग्धे = दग्धप्राये अशुभदर्शित्वादित्यर्थः। श्लोकेऽस्मिन् नायिका आलम्बनम्। तद्दाहाद्युद्दीपनम्। रोदनमनुभावः। मूर्च्छादयो व्यभिचारिणः। शोकः स्थायीभावः। शोकप्रकृतिकः करुणो रसः सामाजिके व्यज्यते।

### १७.३.४ रौद्रः

करुणरसानन्तरं रौद्ररसमुदाहरति - ''कृतमनुमतं दृष्टं वा...'' इत्यादिश्लोकः। पितुः वधेन क्रुद्धस्य अश्वत्थाम्नः अर्जुनादीन् प्रति उक्तिरियम्। मनुजरूपैः पशुभिः, अत एव निर्मर्यादैः = मर्यादाशून्यैः उदायुधैः = उद्यतास्त्रैः भवद्भिः इदं गुरुपातकम् = गुरोः = पितुः वधरूपं पातकं कृतम्। अनुमतम् = अनुज्ञातं दृष्टं वा। तेषां नरकरिपुणा = श्रीकृष्णेन सार्धं सभीमकिरीटिनां = भीमार्जुनसहितानां भवताम् असृङ्मेदोमांसैः = असृक् = रुधिरः, मेदः = वसा मांसैश्च अयमहम् = अश्वत्थामा दिशां = दिग्देवतानां बलिं पूजाम् उपहरामि इत्यर्थः।

अत्र अपकारिणः अर्जुनादयः आलम्बनम्। अक्षाद्युद्यमनम् उद्दीपनम्। प्रतिज्ञा अनुभावः। अन्यनैरपेक्ष्यगम्यगर्वो व्यभिचारी। क्रोधः स्थायिभावः। क्रोधप्रकृतिको रौद्ररसो सामाजिके व्यज्यते।

### १७.३.५ वीरः

वीररसस्योदहरणं प्रदर्शयति - ''क्षुद्रा संत्रासमेते विजहत...'' भो क्षुद्राः = नीचाः हरयः = वानराः! एते यूयं सन्त्रासं-भयं विजहत = त्यजत। यतः क्षुण्णौ = चूर्णितौ शक्रेभस्य = इन्द्रगजस्य कुम्भौ यैः तादृशा अमी सायकाः युष्मद्देहेषु निष्पतन्तः सन्तः परं

लज्जां = केवलं महतीं वा व्रीडां दधति = धारयन्ति। अतः पुनः त्वद्देहेषु बाणान् न क्षेप्स्यामि। हे सौमित्रे = लक्ष्मण! त्वं तिष्ठ = युद्धोद्यमात् विरम। हि यतः त्वं रुषां = मम कोपानां पात्रं नास्ति = न भवति। किन्तु अहं मेघनादः रामम् अन्वेषयामि। कीदृगसौ पराक्रमशीलः इति मार्गयामि। कथम्भूतं राममित्युच्यते- किंचिद् = ईषद् भ्रूभङ्गलीलया नियमितः = बद्धो जलधिः येन तथाभूतं राममिति। अत्र कोपेन मेघनादः राममन्विष्यति।

श्लोकेऽस्मिन् रामः आलम्बनम्। तत्समुद्रबन्धनमुद्दीपनम्। क्षुद्रेषूपेक्षा पराक्रमशालिनि रामे स्पर्धा चानुभावौ। ऐरावतकुम्भचूर्णनस्मृतिः लज्जां दधतीति गम्यगर्वश्च व्यभिचारिणौ उत्साहः स्थायिभावः। उत्साहप्रकृतिको वीररसः सामाजिके व्यज्यते।

### १७.३.६ भयानकः

इदानीं वीररसनिरूपणानन्तरं भयानकरसमुदाहरति ''ग्रीवाभङ्गाभिरामम्...'' इत्यादिना प्रसिद्धेन शाकुन्तलपद्येन। इदानीमपि अयं मृगः पुनरुदग्रप्लुतत्वाद् वियति = आकाशे बहुतरम् उर्व्यां = भूमौ स्तोकम् = अल्पं प्रयाति = गच्छति। कीदृशोऽयं मृगः इत्युच्यते। ग्रीवायाः भङ्गेन = वक्रीभावेन अभिरामं = सुन्दरं यथा तथा मुहुः = वारं वारमनुपतति = पश्चाद् गच्छति स्यन्दने = रथे बद्धदृष्टिः सन् तथा शरपतनभयाद् = बाणपतनभयेन भूयसा = स्थूलेन पश्चार्धेन = अपरार्धभागेन पूर्वकायमुपरिभागम् प्रविष्टः = प्रवेष्टुमारब्धः, तथा श्रमेण = आयासेन विवृतं = विकसितं यन्मुखं तस्माद् भ्रंशिभिः = पतितैः अर्धावलीढैः = नेमजग्धैः दर्भैः कीर्णं = व्याप्तं वर्त्म = मार्गो यस्य तथाभूतः इति। पश्य इति वाक्यार्थः कर्म भवति।

श्लोकेऽस्मिन् पश्चाद्गच्छन् स्यन्दनो राजा वा आलम्बनम्। शरपतनञ्च उद्दीपनम्। ग्रीवाभङ्गादयोऽनुभावाः। श्रमादयो व्यभिचारिणः। भयं च स्थायिभावः। तज्ज्ञे सामाजिके भयप्रकृतिको भयानको रसो व्यज्यते।

### १७.३.७ बीभत्सः

भयानकरसानन्तरं बीभत्सरसमुदाहरति- ''उत्कृत्योकृत्य कृत्तिम्...'' इत्यादिना श्लोकेन। मालतीमाधवे श्मशाने शवभोजिनं प्रेतरङ्कमुद्दिश्य माधवोक्तिरियम्। आर्त्तः = क्षुत्पीडितः, पर्यस्ते = समन्ततः क्षिप्ते नेत्रे येन सः, प्रकटिता = प्रकाशिता दशना = दन्ता येन सः प्रेतेषु रङ्कः = दरिद्रः, पूर्वं कृत्तिं = चर्म उत्कृत्योत्कृत्य = उत्पाट्योत्पाट्य, अथ पृथुना = स्थूलेन उत्सेधेन = उच्छ्रततया भूयांसि अंसयोः = स्कन्धयोः, स्फिचि = ऊरुमूले पृष्ठपिण्ड्यां = जङ्घोर्ध्वभागे एवमाद्यवयवेषु सुलभानि उग्रपूतीनि = उत्कटदुर्गन्धानि मांसानि जग्ध्वा = भक्षयित्वा अङ्कस्थात् = समीपे वर्तमानात् करङ्कात् = प्रेतशरीरात् अस्थिसंस्थम् = अस्थिसम्बद्धम्, स्थपुटगतमपि = निम्नोन्नतभागस्थितमपि क्रव्यम् = अपक्वमांसम् अव्यग्रं = शनैः यथा तथा अत्ति = भक्षयति।

अत्र श्मशानस्थितः शवः आलम्बनम्। मांसाशनमुद्दीपनम्। नासाकुञ्चनादयो-ऽनुभावाः। उद्वेगादयो व्याभिचारिभावाः। जुगुप्सा स्थायिभावः। जुगुप्साजनितो बीभत्सो रसः तज्ज्ञे सामाजिके व्यज्यते।

### १७.३.८ अद्भुतः

बीभत्सरसनिरूपणानन्तरम् अद्भुतरसमुदाहरति। ''चित्रं महानेष बतावतारः- ...'' इत्यादिना श्लोकेन। वामनं प्रति बलेरुक्तिरियम्। महान् = माहात्म्यशीलः एषः पुरुषविशेषः चित्रं = लोकोत्तरचमत्कारि वस्तु भवति। तथा एषोऽवतारः = धर्मस्थापकसदाचारप्रवर्तकः

बत इति हर्षे। एषा = पुरो दृश्यमाना कान्तिः = विलक्षणशोभा क्व नु = कुत्रापि, तथा एषा भङ्गिः = गमनोपवेशनादिः अभिनवैव = विलक्षणैव, तथा धैर्यम् = अचलचित्तत्वम् अस्य। लोकोत्तरं = लोकविलक्षणं प्रभावः = सामर्थ्यम्। अहो =अलौकिकः, आकृतिः = अवयवसंस्थानं, कापि = अनिर्वचनीया। एष सर्गः - निर्माणं नूतनं = ब्रह्मसर्गविलक्षणः।

अत्र वामनः आलम्बनम्। कान्त्यतिशयादि उद्दीपनम्। स्तवादयोऽनुभावाः। धृतिहर्षादयो व्यभिचारिणः। विस्मयः स्थायिभावः। विस्मयजनितोऽद्भुतो रसोऽभिज्ञे सामाजिके व्यज्यते।

एवं शृङ्गारादीनाम् अष्टौ अपि रसानाम् उदाहरणानि प्रदर्शितानि।

---

**मूलग्रन्थः**

**तद्विशेषानाह -**
**शृङ्गारहास्यकरुण-वीर-रौद्र-भयानकाः।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥ २१॥**

**तत्र शृङ्गारस्य द्वौ भेदौ। सम्भोगो विप्रलम्भश्च। तत्राद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तत्वादपरिच्छेद्य एक एव गण्यते। यथा -**

**शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।**
**विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥ ३०॥**

**तथा -**
**त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं**
**लक्ष्मीमित्याभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि।**
**शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो**
**निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥ ३१॥**

**अपरस्तु अभिलाष-विरहेर्ष्या-प्रवास-शापहेतुक इति पञ्चविधः। क्रमेणोदाहरणम्-**

**प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-**
**स्तास्ता मुग्धदृशोर्निसर्गमधुराश्चेष्टा भवेयुर्मयि।**
**यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्रमा-**
**दासंशापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः॥ ३२॥**

**अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृद्**
**यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः।**
**इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे।**
**बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि॥ ३३॥**

**एषा विरहोत्कण्ठिता।**
**सा पत्युः प्रथमापराधसमये सख्योपदेशं विना**
**नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।**
**स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला**
**बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥ ३४॥**

प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्त्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते॥ ३५॥

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्त्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥ ३६॥

हास्यादीनां क्रमेणोदाहरणम्।
आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि
वेश्यामन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे।
तारस्वनं प्रथितथूत्कमदात् प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा॥ ३७॥

हा मातस्त्वरितासि कुत्र किमिदं हा देवता क्वाशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि॥ ३८॥

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥ ३९॥

क्षुद्राः, संत्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः।
सौमित्रे तिष्ठ! पात्रं त्वमसि नहि रुषा नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि॥ ४०॥

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥ ४१॥

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।
आर्तः पर्यस्तनेत्रः प्रकटितरशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति॥ ४२॥

चित्रं महानेष नवावतारः क्व कान्तिरेषाभिनवैव भङ्गिः।
लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः॥ ४३॥

---

**बोधप्रश्नः**

१. रसानाम् अष्टौ नामानि लिखतु।

२. शृङ्गाररसस्य भेदप्रभेदाः के ?

३. ''शून्यं वासगृहम्...'' इत्यादिश्लोके कः रसः ? विभावानुभावव्यभिचारिणश्च के?

## १७.४ स्थायिभावाः

सामाजिकानां मनसि वासनात्मतया स्थिररूपेण केचन भावाः तिष्ठन्ति। उचितैः विभावानुभावव्यभिचारिभिः चर्व्यमाणा एते भावाः रसपदवाच्याः भवन्ति। सामाजिकहृदयेषु स्थिररूपेणावस्थानात् एते स्थायिनः कथ्यन्ते।

स्थायिनः लक्षणन्तु एवमुक्तं भवति-

**विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः।**
**आनन्दाङ्कुरकन्दोऽसौ भावः स्थायीति संज्ञितः॥ इति॥**

रसास्वादस्य बीजरूपोऽसौ भावः। शृङ्गारादिरसानां यथासंख्यम् एते भावा अपि अष्टौ सन्ति। तदुच्यते मूलग्रन्थे -

**रतिर्हासश्च शोकश्च क्रोधोत्साहो भयन्तथा।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥ इति।**

**स्थायिभावाः**

### १७.४.१ रत्यादीनां स्वरूपप्रदर्शनम्

शृङ्गारस्थायी रतिः अन्योन्यास्थाबन्धात्मिका भवति। हास्यरसस्य स्थायी चित्तस्य विकासात्मको हासः। करुणरसस्थायी वैधुर्यात्मकः शोकः। रौद्रस्थायी तैक्ष्ण्य-प्रबोधात्मकः क्रोधः। वीररसस्थायी स्थेयान्संरंभात्मकः उत्साहः। भयानकस्थायी वैक्लव्यात्मकं भयम्। बीभत्सरसस्थायी चित्तसंकोचात्मिकजुगुप्सा। अद्भुतस्थायी चित्तविस्तारात्मको विस्मयः।

| रसाः | स्थायिभावाः |
| --- | --- |
| शृङ्गारः | रतिः |
| हास्यः | हासः |
| करुणः | शोकः |
| वीरः | क्रोधः |
| रौद्रः | उत्साहः |
| भयानकः | भयम् |
| बीभत्सः | जुगुप्सा |
| अद्भुतः | विस्मयः |

एतेषां स्थायिभावानां लक्षणानि साहित्यदर्पणे विस्तरेण निरूपितानि सन्ति। सामान्यावबोधाय तानि अत्र लिख्यन्ते। तद्यथा –

**रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्।**
**वागादिवैकृताच्चेतोविकासो हास उच्यते॥**

**इष्टनाशदिभिश्चेतोवैक्लव्यं शोक उच्यते।**
**प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोधसंज्ञितः॥**

**कार्यारम्भेषु संरंभः स्थेयानुत्साह उच्यते।**
**रौद्रशक्त्या तु जनितं वैक्लव्यं मनसो भयम्॥**

**दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते।**
**विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात्॥ इति।**

---

**मूलग्रन्थः**

**एषां स्थायिभावानाह –**

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिता॥ ३० ॥**

---

**बोधप्रश्नः**

१. साहित्यदर्पणे कथितं स्थायिभावलक्षणं लिखत।

२. स्थायिभावाः कति ? के च ते ?

## १७.५ व्यभिचारिभावाः

रत्यादयः भावाः चिरं चित्ते अवतिष्ठन्ते। एते च भावाः रसत्वं प्रतिपद्यन्ते। अतः एव एते स्थायिनः कथ्यन्ते। एतेषां स्रक्सूत्रन्यायेन प्रबन्धेषु उपस्थितिः। एष च भावः सजातीयैः विजातीयैश्च अतिरस्कृतो भवति।

अन्ये केचन चित्तवृत्तिविशेषाः सन्ति ये फेनबुद्बुदन्यायेन चित्ते उपस्थिताः सन्ति। प्रबन्धेष्वपि एते एवमेव वर्णिताः। कदाचित् कस्मिंश्चित् रसे एते आगच्छन्ति कदाचिच्च नैवागच्छन्ति। एते भावाः व्यभिचारिणः कथ्यन्ते। विशेषादाभिमुख्येन रसेषु भावेषु वा चरन्तीति व्यभिचारिणः कथ्यन्ते। प्रकृते पाठभागे एतेषां नामानि केवलं कथितानि सन्ति। एते त्रयस्त्रिंशत्संख्यकाः सन्ति। तदुक्तं – "त्रयस्त्रिंशदमी भावा समाख्यातास्तु नामतः" इति। समाख्याताः इत्यस्य संक्षेपेण कथिताः इति। नामतः संक्षेपेण एते व्यभिचारिणः निर्वेदादयः कथिताः सन्ति। संक्षेपेण इति कथनस्य अयमाशयः। अयं व्यभिचारिभावः निर्वेदादिः भवति। एतेभ्यः त्रयस्त्रिंशद्भावेभ्यः अतिरिक्ताः अपि व्यभिचारिभावाः सन्ति। यथा स्थायिभावा अपि व्यभिचारिणः भवन्ति। शृङ्गाररसस्य वर्णने रतिभावः स्थायी भवति। तत्र शृङ्गारे वर्ण्यमानाः हासादयः व्यभिचारिणः सन्ति, न तु स्थायिनः। एवं व्यभिचारिणामुभयी गतिरस्ति इति महिमभट्टोऽपि वदति। स्थायित्वं व्याभिचारित्वं च। सात्त्विकभावा अपि व्यभिचारिण एव। एवं साकल्येन उच्यते चेत् रत्यादयः अष्टौ भावाः, निर्वेदादयः त्रयस्त्रिंशद् भावाः, स्तम्भादयः अष्टौ सात्त्विकभावाश्च आहत्य एकोनपञ्चाशतद्भावा अपि व्यभिचारिण एव। व्यभिचारिणः ये त्रयस्त्रिंशत् नामतः कथिताः ते स्थायिनः न भवन्ति इति स्थायिनः व्यभिचारिणश्च भेदः। एतेषां नामानि क्रमेण लिख्यन्ते –

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १. | निर्वेदः | २. | ग्लानिः | ३. | शङ्का | ४. | असूया |
| ५. | मदः | ६. | श्रमः | ७. | आलस्यम् | ८. | दैन्यम् |
| ९. | चिन्ता | १०. | मोहः | ११. | स्मृतिः | १२. | धृतिः |
| १३. | व्रीडा | १४. | चपलता | १५. | हर्षः | १६. | आवेगः |
| १७. | जडता | १८. | गर्वः | १९. | विषादः | २०. | औत्सुक्यम् |
| २१. | निद्रा | २२. | अपस्मारः | २३. | सुप्तः | २४. | विबोधः |
| २५. | अमर्षः | २६. | अवहित्थम् | २७. | उग्रता | २८. | मतिः |
| २९. | व्याधिः | ३०. | उन्मादः | ३१. | मरणम् | ३२. | त्रासः |
| ३३. | वितर्कः इति। | | | | | | |

---

**मूलग्रन्थः**

**व्यभिचारिणो ब्रूते –**

**निर्वेदग्लानिशङ्काख्यास्तथाऽसूया मदश्रमाः।**
**आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः॥ ३१॥**

**व्रीडा चपलता हर्ष आवेगो जडता तथा।**
**गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च॥ ३२॥**

**सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता।**
**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च॥ ३३॥**

**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः।**
**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः॥ ३४ ॥**

---

**बोधप्रश्नः**

१. व्यभिचारिणः स्थायिनश्च को भेदः ?

२. नामतः कति व्यभिचारिणः समाख्याताः ?

३. वस्तुतः कति व्यभिचारिणः भवन्ति ?

## १७.६ नवमो रसः

'अष्टौ नाट्ये रसाः स्मृताः' इत्युक्त्वा अन्यत्र इतोऽपि अधिकाः रसाः भवितुमर्हन्ति इति भरतमुनिना सूचितम्। एतदेव मम्मटस्यापि मतम् वर्तते। असौ नवमो रसः शान्तः भवति इति स्वीकरोति। यदि नवमः रसः अस्ति तर्हि तस्य स्थायी कः इत्याकाङ्क्षा भविष्यति। तत्रोच्यते मम्मटेन- निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः। इति। व्यभिचारिणां मध्ये प्रायेण अमङ्गलस्वरूपस्य निर्वेदस्य प्रथमं कथनेन मुनिः तस्य स्थायित्वमपि अङ्गीकरोति। अयं च स्थायीभावः नवमस्य शान्तरसस्यैव अस्ति। एवं काव्ये नवमः रसः विद्यते इति मम्मटमतम्।

### १७.६.१ व्यभिचारिभावेषु निर्वेदस्य प्रथमोल्लेखवैशिष्ट्यम्

व्यावहारिकलोके आपदीर्ष्यादेः निर्वेदो जायते। अयं निर्वेदः स्वावमाननरूपः अस्ति। अनया दृष्ट्या निर्वेदस्य अमङ्गलत्वं स्वीक्रियते। परं तत्त्वज्ञानेनापि निर्वेदो भवति। तस्य अमङ्गलत्वं नास्ति। तथापि सामान्येन निर्वेदः अमङ्गलस्वरूपः गण्यते। अमङ्गलस्वरूपस्य निवेर्दस्य व्यभिचारिषु प्रथममुल्लेखः मुनिना किमर्थं कृतः। व्यभिचारित्वेऽपि अस्य स्थायित्वमपि वर्तते इति प्रकाशयितुमेव अस्य व्यभिचारिषु प्रथमकथनम्। एतदेव विस्तरेणोच्यते "निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताभिधानार्थमि" ति।

अमङ्गलप्रायत्वं निर्वेदस्य प्रसिद्धमस्ति। हेयबुद्धितया अमङ्गलत्वम् उच्यते। अमङ्गलप्रायं वस्तु प्रथमं नोपादीयते सामान्येन। अत्र तु अमङ्गलप्रायस्यापि निर्वेदस्य उपादानं प्रथममेव कृतमस्ति। तस्य तु प्रयोजनं निर्वेदस्य स्थायित्वकथनमपि। स्थायिव्यभिचारिणोर्मध्ये निवेर्दस्य कथनेन देहलीदीपन्यायेन निर्वेदः स्थायी व्यभिचारी च भवति। अनेन च निर्वेदस्य स्थायित्वं सिद्धम्। व्यभिचारिषु अन्यतमोऽपि निर्वेदः अमङ्गलप्रायोऽपि प्रथममेव कथित इति तस्य स्थायित्वमपि सङ्गच्छते। तथा च तत्त्वज्ञानजन्यस्य निर्वेदस्य स्थायित्वम् आपदीर्ष्यादिजन्यस्य तस्य व्यभिचारित्वमेवेति मम्मटस्य सिद्धान्तः।

यदि निर्वेदः स्थायी उच्यते तर्हि कतमस्य रसस्य असौ स्थायी भवति? अष्टौ रसाः ये कथिताः तेषां तु स्थायिनः अपि निर्णीताः सन्ति। अतः उच्यते निर्वेदस्थायिभावः शान्तः अपि नवमः रसः अस्ति इति। निर्वेदः स्थायिभावो यस्य सः = निर्वेदस्थायिभावः अयञ्च शान्तः इत्यस्य विशेषणं भवति। अनेन च शान्तः निर्वेदस्थायिभावः इति फलितम्। अतः मम्मटभट्टमतानुसोरण शान्तः नवमः रसो भवति। तस्य च स्थायी निर्वेदः अस्ति। "अष्टौ नाट्ये रसाः स्मृताः" इत्यत्र नाट्ये एव अष्टौ रसाः इति व्यवच्छेदः। तेन च नवमोऽयं रसः न तु नाट्ये अपि तु काव्ये एव भवेत्। एतस्मिन् विषये निश्चयेन ग्रन्थे किमपि नोक्तमस्ति।

### १७.६.२ सोदाहरणं शान्तरसनिरूपणम्

मम्मटेन शान्तरसः स्वीकृतः। तस्य स्थायिभावः निर्वेदः इत्यपि कथितः।

इदानीं तस्योदाहरणमुच्यते – ''अहौ वा हारे वा...'' इत्यादिना श्लोकेन। कश्मीरदेशवासिनः श्रीमदुत्पलदेवस्य पद्यमिदम्। अहौ = सर्पे, हारे = मुक्ताहारे अथवा कुसुमशयने = पुष्पाकीर्णे पर्यङ्के, दृषदि = शिलायाम् वा मणौ = रत्ने, लोष्ठे = मृत्पिण्डे वा, रिपौ = सपत्ने, सुहृदि = मित्रे, तृणे = घासे, स्त्रैणे = स्त्रीसमूहे वा, समा = वैषम्यरहिता, एकत्वात्मिका वा दृष्टिर्यस्य तस्य, तथा क्वचिद् = अपवित्रदेशे, पुण्यारण्ये = नेमिषारण्यादौ पावनभूमौ, शिवशिवेति श्रेयस्करम् वदतो अनर्थकं वदतो वा मम दिवसाः यान्ति इति। अत्र शुभकार्येषु अशुभकार्येषु वा सर्वत्र मम दिनानि व्यतीतानि भवन्ति इति कथनेन वक्तुः सर्वत्र समत्वबुद्धिः अस्तीति गम्यते। अयमेव निर्वेदः। अयञ्च ज्ञानेन जातः। श्लोकेऽस्मिन् मिथ्यात्वेन परिभूयमानं जगदालम्बनम्। तपोवनाद्युद्दीपनम्। अहिहाराद्योः समदर्शनमनुभावः। मतिधृतिहर्षाः व्यभिचारिभावाः। निर्वेदः तत्त्वज्ञानजन्योऽत्र स्थायी। रसाभिज्ञे सामाजिके शान्तरसनिष्पत्ति-र्व्यज्यते।

---

**मूलग्रन्थः**

**निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताभि-धानार्थम्। तेन –**

**''निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।**
**अहौ वा हारे वा कुसुमशयने वा दृषदि वा**
**मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा।**
**तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः**
**क्वचित्पुण्यारण्ये शिवशिवेति प्रलपतः॥''**

---

**बोधप्रश्नः**

१. व्यभिचारिभावेषु निर्वेदस्य प्रथममुल्लेखः किमर्थं कृतः ?

२. निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः। इत्यस्य कोऽर्थः ?

३. अहौ वा हारे वा इत्यादिश्लोके कः रसः ? तस्य विभावादयश्च के ?

## १७.७ सारांशः

पूर्वस्मिन् पाठे रसस्वरूपं विस्तरेण निरूपितम् विद्यते। इदानीम् अस्मिन् पाठे रसभेदाः तेषामुदाहरणानि च विवेच्यन्ते। नाट्ये शृङ्गारः हास्यः, करुणः, रौद्रः, वीरः, भयानकः, बीभत्सः, अद्भुतः इति अष्टौ रसाः भवन्ति। तत्र शृङ्गारोऽपि संभोगशृङ्गारः विप्रलम्भशृङ्गार इति द्विविधः। संभोगशृङ्गारः अनेकप्रभेदप्रभिन्नोऽपि अपरिच्छेद्यत्वात् एकविधः स्वीकृतः। विप्रलम्भस्य अभिलाषविरहेर्ष्याप्रवासशापहेतुभिः पञ्च भेदाः। हास्यादीनाम् रसानाम् अन्यत्र ग्रन्थेषु भेदाः कथिताः अपि काव्यप्रकाशे भेदाः न स्वीकृताः। सर्वेषां रसानाम् उदाहरणानि अस्मिन् पाठे निरूपितानि सन्ति।

रसानां निरूपणाननतरं स्थायिभावाः अपि निरूपिताः। रतिः, हासः, शोकः, क्रोधः, उत्साहः, भयम्, जुगुप्सा, विस्मय इति यथाक्रमं रसानां स्थायिनः अपि निरूपिताः।

सहृदयानां मनसि विद्यमानाः अस्थायिनः चित्तवृत्तिविशेषाः व्यभिचारिणः कथ्यन्ते। एते त्रयस्त्रिंशत्संख्यकाः नामतो निर्दिष्टाः। रत्यादीनामपि रसान्तरेषु व्यभिचारित्वमेव विद्यते। सात्त्विकान् भावान् अपि आहत्य एकोनपञ्चाशद्भावाः वस्तुतः व्यभिचारिणः भवन्ति।

व्यभिचारिभावेषु अमङ्गलप्रायोऽपि निर्वेदः प्रथमम् उल्लिखितः। स्थायिनां

व्यभिचारिणाञ्च मध्ये निर्वेदस्योल्लेखात् देहलीदीपन्यायेन निर्वेदस्य स्थायित्वं व्यभिचारित्वञ्च सङ्गच्छते। एतस्य स्थायित्वे स्वीकृते सति शान्तरसस्य नवमस्यापि उपस्थितिः मम्मटेनाङ्गीक्रियते। शान्तरसः निर्वेदस्थयिभावः अस्ति। शान्तरसस्य उदाहरणमपि प्रदर्श्य पाठोऽयं समाप्तिं गच्छति।

## १७.८ शब्दावली

१. संभोगः – संयुक्ताभ्यां भुज्यते इति संभोगः। अत्र नायिका-नायकौ संयुक्तौ रसमुपभुङ्क्तः।

२. विप्रलम्भः – संयोगास्वादलोभेन वियुक्ताभ्यां प्रलभ्यते आत्मा अत्रेति विप्रलम्भः।

३. निर्वेदस्थायिभावः – निर्वेदः स्थायिभावः यस्य सः इति बहुव्रीहिः।

४. आसंशा – मनोरथः

## १७.९ सन्दर्भग्रन्थः


१. काव्यप्रकाशः – सङ्केतव्याख्यासहितः – आनन्दाश्रमप्रकाशनम् १९२१ ई.

२. काव्यप्रकाशः – झलकीकरवामनः भण्डारकर इन्स्ट्यूट पूणे १९६५ ई.

३. काव्यप्रकाशः – आदर्शव्याख्यासहितः – परिमलप्रकाशनम् देहली १९८५ ई.

४. काव्यप्रकाशः – साहित्यचूडामणि-सुधासागरसहितः काशी विश्वविद्यालयः १९८१ ई.


## १७.१० सहायकग्रन्थः


१. नाट्यशास्त्रम् – अभिनवभारतीयुक्तम् – भरतमुनिः

२. व्यक्तिविवेकः – महिमभट्टः


## १७.११ बोधप्रश्नोत्तराणि

१. शृङ्गारः, हास्यः, करुणः, रौद्रः, वीरः, भयानकः, बीभत्सः, अद्भुतः इति अष्टौ नाट्ये रसाः भवन्ति।

२. शृङ्गारस्य संभोगः विप्रलम्भः इति द्वौ भेदौ। तत्र संभोगस्य अनन्तप्रभेदत्वाद् एकविधः एव। विप्रलम्भस्य अभिलाषविरहेर्ष्याप्रवासशापहेतुभिः पञ्चप्रभेदाः।

३. शून्यं वासगृहं विलोक्य... इत्यादिश्लोके संभोगशृङ्गारो रसः। अत्र नायकः आलम्बनविभावः। शून्यगृहनायकनिद्रादिः उद्दीपनविभावः। मुखनिर्वर्णन-चुम्बनादिरनुभावः। लज्जाहासव्यङ्ग्यहर्षादिः व्यभिचारिभावः। रतिः स्थायिभावः।

( १७.४. )

१. **विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः।**
**आनन्दाङ्कुरकन्दोऽसौ भावः स्थायीति संज्ञितः॥**

स्थायिभावलक्षणं भवति।

२. अष्टौ स्थायिभावाः। रतिः, हासः, शोकः, क्रोधः, उत्साहः, भयम्, जुगुप्सा विस्मय इति तेषां नामानि भवन्ति।

( १७.५ )

१. फेनबुद्बुदन्यायेन सहृदयानां मनसि अस्थायित्वेन विद्यमानाः भावाः व्यभिचारिणः सन्ति। स्रक्सूत्रन्यायेन सहृदयानां मनसि स्थायिरूपेण विद्यमानाः भावाः स्थायिनः सन्ति।

२. नामतः त्रयस्त्रिंशद् व्यभिचारिणः समाख्याताः सन्ति।

३. त्रयस्त्रिंशद् व्यभिचारिणः नामतो निर्दिष्टाः। सात्त्विकभावाः अष्टौ अपि व्यभिचारिण एव भवन्ति। रसान्तरेषु रत्यादयः व्यभिचारिणः भवन्ति। एवं व्यभिचारिणः एकोनपञ्चाशद्भेदाः सन्ति।

( १७.६ )

१. निर्वेदः स्थायिभावोऽपि भवति इति प्रकाशयितुं अमङ्गलप्रायस्यापि तस्य व्यभिचारिषु प्रथमं प्रतिपादनं कृतम्।

२. निर्वेदः स्थायीभावः यस्य सः निर्वेदस्थायिभावः। निर्वेदस्थायिभावः शान्तः इति नवमः अष्टाभ्यः रसेभ्यः अतिरिक्तः रसः अस्ति इति कारिकार्थः।

३. अहौ वा हारे वा ... इत्यादिश्लोके शान्तो रसः। अत्र मिथ्यात्वेन परिभूयमानं जगदालम्बनम्। तपोवनाद्युद्दीपनम्। अहिहाराद्यो: समदर्शनमनुभावः। मतिधृतिहर्षाः व्यभिचारिणः। तत्त्वज्ञानजन्यः निर्वेदः स्थायी च।

## १७.१२ अभ्यासप्रश्नाः

१. रसभेदान् विलिख्य संभोगशृङ्गाररसस्य एकम् उदाहरणं लिखतु। तस्मिन् च विभावादीनां विवेचनं करोतु।

२. व्यभिचारिभावानां स्थायिभावानाञ्च भेदमुक्त्वा त्रयस्त्रिंशद्व्यभिचारिणां नामानि लिखतु।

३. व्यभिचारिभावेषु निर्वेदस्य प्रथममुल्लेखे कारणमुक्त्वा शान्तरसं सोदाहरणं निरूपयतु।

---◆---

# अष्टादशः पाठः ( भावादिध्वनिस्वरूपम् )

## पाठसंरचना



## १८.१ प्रस्तावना

अत्र काव्यप्रकाशस्य अष्टादशे पाठे भवतां स्वागतम्। इतः पूर्वं भवन्तः साहित्यदर्पणस्य तृतीये परिच्छेदे भावादीनामपि रसत्वं सम्भवतीति पठितवन्तः। इदानीम् इमां कारिकां पुनः स्मरन्तु–

**रसभावो तदाभासो भावस्य प्रशमोदयौ।**
**सन्धिः शबलता चेति सर्वेपि रसनाद्रसाः॥ इति।**

भवद्भिः ज्ञातं यत् भावादयः रसनधर्मयोगित्वात् रसपदवाच्याः भवन्तीति। रसधर्मः इति कथनेन आस्वादनम् इति अर्थः। भावादिषु आस्वादनत्वं समानरूपेण अस्ति इति कारणतः तेऽपि रसपदेन ग्रहणीयाः। तस्मात् विश्वनाथस्य मते-वाक्यं रसात्मकं काव्यम् इति अत्र प्रयुक्तम् रसपदं भावादिकम् अपि बोधयति। अर्थात् भावः रसाभासादेः वा यत्र भवेत्, तत्रापि काव्यत्वं ग्रहणीयम्। भवतां मनसि अवश्यं स्यात् यत् ध्वनिकारः आचार्यः आनन्दवर्धनः स्वकीये ध्वन्यालोकग्रन्थे-काव्यस्यात्मा ध्वनिः इति सिद्धान्तम् उद्घोषितवान् इति। तत्र मुख्यतः व्यङ्ग्यार्थस्य प्राधान्यं, तत्र वस्तुध्वनिः, यत्र अलङ्काररूपस्य व्यङ्ग्यार्थस्य प्राधान्यं तत्र अलङ्कारध्वनिः, यत्र च रसरूपस्य व्यङ्ग्यार्थस्य प्राधान्यं तत्र रसादिध्वनिः इति व्यवहारः क्रियते। यत्र च रसरूपस्य व्यङ्ग्यार्थस्य प्राधान्यं तत्र रसादिध्वनिः इति व्यवहारः क्रियते।

इदानीं काव्यप्रकाशकारः आचार्यः मम्मटः भावादिरूपकस्य व्यङ्ग्यार्थस्य प्राधान्ये भावादिध्वनिः सम्भवति इति ध्वनिसिद्धान्तं समर्थयति। भवतां स्मरणे ध्वन्यालोकस्य इयमपि कारिका भवेत् यथा–

**रसभावातदाभासतत्प्रशान्त्यादिरक्रमः।**
**ध्वनेरात्माऽङ्गिभावेन भासमानो व्यवस्थितः॥ इति।**

ध्वनिकारमते-मुख्यतया प्रकाशमानो व्यङ्ग्यार्थो ध्वनेरात्मा इति। स च व्यङ्ग्यार्थः क्वचित् वाच्यार्थापेक्षया अलक्षक्रमतया प्रकाश्यते। अर्थात् वाच्यार्थप्रतीतिसमनन्तरमेव व्यङ्ग्यार्थप्रतीतेः क्रमः नैव लक्ष्यते। अयं च असंलक्ष्यक्रमव्यङ्ग्यध्वनिः रसादिध्वनिः इति आनन्दवर्धनसिद्धान्तः। ध्वनिमतावलम्बी मम्मटः अपि स्वकीये काव्यप्रकाशे चतुर्थे उल्लासे ध्वनिनिर्णयावसरे भावध्वनिविषये पर्य्यालोचितवान्।

आचार्यप्रथमवर्षे भवन्तः सम्प्रति रसादिध्वनिविचारप्रसङ्गे भावध्वनिविषयेऽपि सम्यक् पठिष्यन्ति। अस्मिन् पाठे भवन्तः अवश्यं ज्ञास्यन्ति यत्–

- कः भावः ?
- भावध्वनिः कुत्र भवति ?
- शृङ्गाररसभावध्वन्योः कः भेदः ?
- भावध्वनौ के गृह्यन्ते ?
- रसाभासस्य किं स्वरूपम् ?
- कः भावाभासः ?
- भावशान्त्यादिध्वनयः के ? इत्यादि।

संक्षेपेण वक्तुं शक्यते यत् अस्मिन् पाठे भवन्तः काव्यप्रकाशग्रन्थे प्रतिपादितस्य भावध्वनेः विषये अध्ययनं करिष्यन्ति। अत्र मूलग्रन्थानुसारम् उदाहरणपद्यस्यापि चर्चा वर्तते।

## १८.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवन्तः–

- भावध्वनिविषये सम्यक् ज्ञानम् अर्जयिष्यन्ति।

- भावादयः रसपदवाच्याः भवन्ति इति ज्ञास्यन्ति।
- अविधामूलध्वनेः एकः भेदः रसादिध्वनिः इति ज्ञातुं प्रभविष्यन्ति।
- भावादिध्वनेः भेदान् निरूपयिष्यन्ति।
- भावध्वनेः स्वरूपं निर्णेतुं सक्षमाः भविष्यन्ति।
- भावध्वनिप्रसङ्गे मम्मटभट्टस्य अभिप्रायं प्रकटयितुं शक्ष्यन्ति।

## १८.३ कान्ताविषयभिन्ना रतिः भावध्वनिः

### १८.३.१ देवादिविषया रतिः

भवन्तः जानन्ति यत् ध्वनिवादिनः काव्ये मुख्यभूतं तत्त्वं ध्वनिः इति अङ्गीकुर्वन्ति। स च ध्वनिः द्विविधा-अविवक्षितवाच्यध्वनिः, विवक्षितान्यपरवाच्यध्वनिश्चेति। अविवक्षितवाच्यस्यापि अर्थान्तरसंक्रमितवाच्यत्वेन, अत्यन्ततिरस्कृतवाच्यत्वेन च भेदद्वयम् अस्ति। अयं ध्वनिः लक्षणामूलाध्वनिः इति कथ्यते। विवक्षितान्यपरवाच्यध्वनिः अविधामूल-ध्वनिरूपेण परिचितः। अस्यापि भेदद्वयमस्ति-असंलक्ष्यक्रमध्वनिः, संलक्ष्यक्रमध्वनिः इति। असंलक्ष्यक्रमध्वनेः नामान्तरं रसादिध्वनिः इति। रस्यते अर्थात् आस्वाद्यते इति रसः। अयं रसः शृङ्गारादिभेदेन नवधा विभक्तः इति भवन्तः पूर्वं जानन्ति एव। तत्र भावादीनाम् आस्वादनयोग्यता अस्ति। अथ भावादयः रसपदवाच्याः भवन्ति। किन्तु शृङ्गारादिभ्यः रसेभ्यः भावादीनां कश्चिद् भेदः वर्तते। शृङ्गारस्य रसस्य स्थायिभावरूपेण कान्तादिविषया रतिः वर्तते। अतः यदि काव्ये कान्तादिविषया रतिः प्राधान्येन अभिव्यज्यते, तदा शृङ्गाररसः अभिव्यक्तः भवति। यदि कान्ताविषयभिन्ना रतिः अभिव्यज्यते, तर्हि भावध्वनिः कथ्यते। कान्ताविषयाद् भिन्ना रतिः इति कथनेन मम्मटः देवादिविषया रतिः इति उल्लिखति। तत्र आदिशब्दात् मुनि-गुरु-नृप-पुत्रादिविषया रतिः इति स्वीक्रियते। अतः यत्र देवादिविषया रतिः प्राधान्येन काव्ये वर्ण्यते तत्काव्यं भावध्वनिप्रधानकाव्यम् इति व्यवहारः। एतस्य उदाहरणं यथा-

**कण्ठकोणविनिविष्टमीश ते कालकूलमपि मे महामृतम्।**
**अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते॥ इति।**

काश्मीरकवेः श्रीमदुत्पलाचार्यप्रणीतस्य परमेश्वरस्तोत्रावली इति काव्यस्य त्रयोदशस्तोत्रे पद्यमिदं दृश्यते। अत्र भक्तः प्रार्थयते-हे ईश! तव कण्ठस्य कोणे नितरां संलग्नम् उत्कटं विषमपि मम कृते महामृतं भवति। किन्तु तव शिरसि चन्द्रकलारूपममृतं धृतमपि तव शरीरं न स्पृष्टमिति हेतोः मम कृते रुचिकरं नास्ति इति।

अत्र महादेवः आलम्बनविभावः, ईशपदेन कथितस्य महादेवस्य ऐश्वर्यम् उद्दीपनविभावः, स्तवः अनुभावः, धृति-माहात्म्यस्मरणप्रभृतयः व्यभिचारिभावाः। एतेषां संयोगात् देवादिविषया रतिः अभिव्यज्यते। अतः इदं भावध्वनिकाव्यं भवति।

### १८.३.२ मुनिविषया रतिः

वयं जानीमः यत् देवादिविषया रतिः भावध्वनिकाव्यम् इति। अत्र आदिपदेन मुनिविषया रतिः गुरुविषया रतिः नृपपुत्र्यादिविषया रतिः च भावध्वनिकाव्यरूपेण स्वीकृता। अतः मम्मटः दिग्दर्शनाय देवविषयां रतिम् उदाहृत्य मुनिविषयकरतियोगात् भावस्थलम् उदाहरति। यथा-

**हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।**
**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥ इति।**

संस्कृतसाहित्ये महाकविमाघकृते सुप्रसिद्धे शिशुपालवधमहाकाव्ये प्रथमे सर्गे इदं पद्यं दृश्यते। अत्र नारदं प्रति भगवतः श्रीकृष्णस्य उक्तिः वर्णिता। श्रीकृष्णः कथयति– हे मुने! भवदीयं दर्शनम् एव देहधारिणां प्राणिनां वर्तमानादिकालत्रयेऽपि अभीष्टार्थप्रदानयोग्यतां प्रकाशयति। अर्थात् वर्तमानकाले उत्पन्नं पापं हरति। भविष्यत्काले च शुभप्रदानाय भवतः दर्शनं कारणमस्ति। किं च पूर्वजन्मनि अर्जितैः सुकृतैः भवदीयं दर्शनं कृतमस्ति। अर्थात् वर्तमानकाले पापनाशरूपयोग्यता भविष्यत्काले श्रेयः साधनरूपा योग्यता अतीते काले च तथाविधं सुकृतम् इति योग्यता भवतः दर्शनद्वारा सिद्ध्यति।

अस्मिन् काव्ये मुनिविषयायाः श्रीकृष्णरतेः मुनिः आलम्बनविभावः, दर्शनयोग्यतारूपकः मुनेः प्रभावः उद्दीपनविभावः। श्रीकृष्णस्य मुखेन मुनेः गुणकीर्त्तनादिः उक्तिः अनुभावः। हर्षः व्यभिचारिभावः। एतेषां संयोगात् मुनिविषया रतिः सहृदयहृदये आस्वाद्या भवति। अतः इदम् अपि भावध्वनिकाव्यं भवति। एवम् एव गुरुविषया रतिः, नृपविषया रतिः, पुत्रादिविषया रतिः च भावध्वनिकाव्येषु वर्णनीयाः।

तदेवं मम्मटमते देवादिविषया भक्ति-अपरपर्याया रतिः भावध्वनिः। कान्ताविषया रतिः तु शृङ्गारः रसः इति स्पष्टतया ज्ञायते। तदुक्तं मम्मटेन काव्यप्रकाशे।

---

**मूलग्रन्थः–**

**रतिर्देवादिविषया व्यभिचारी तथाञ्जितः।**
**भावः प्रोक्तः।**
**आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया। कान्ताविषया तु व्यक्ता शृङ्गारः।**

**उदाहरणम्–**

**कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम्।**
**अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते॥**

**हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।**
**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥**

---

**बोधप्रश्नः**

१. भावादिध्वनयः कस्मिन् ध्वनौ अन्तर्भवन्ति ?

२. मम्मटमते कः भावध्वनिः ?

३. मम्मटमते भावध्वनेः शृङ्गाररसस्य च कः भेदः ?

## १८.२ व्यञ्जितव्यभिचारिभावो भावध्वनिः

भवन्तः भावध्वनेः परिचयं प्राप्तवन्तः। यत्र देवादिविषया रतिः प्रधानतया अभिव्यज्यते तत्रैव भावध्वनिः इति ज्ञातम्। तथैव मम्मटमते यत्र व्यभिचारिभावः प्रधानरूपेण अभिव्यज्यते तत्रापि भावध्वनिः भवति। इतः पूर्वं भवन्तः त्रयस्त्रिंशतं व्यभिचारिभावान् नामतः ज्ञातवन्तः। अतः एतेषु यदि कश्चित् कुत्रचित् काव्ये प्रधानरूपेण अभिव्यक्तः भवति तर्हि तत्र भावध्वनिकाव्यम् इति व्यवहारः स्यात्।

**मूलग्रन्थः–**

**अञ्जितव्यभिचारि यथा–**

**जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया।**
**मां मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः॥**

**नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां।**
**भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः॥**

**अत्र विधिं प्रत्यसूया।**

**कस्यचित् विरहिजनस्य स्वमित्रं प्रति उक्तिः काव्येऽस्मिन् वर्णिता। स च विरही स्वप्ने स्वकीयां प्रियतमां दृष्टवान्। किन्तु स्वप्नभङ्गकारणतः दुःखी अभवत्। अतः तेन कथ्यते– हे भ्रातः! अद्य मया प्रियतमा स्वप्ने दृष्टा। सा कोपेन पराङ्मुखी आसीत्। अतः हस्तेन मां न स्पृश इति कथयन्ती रोदनं कुर्वती सा अग्रे गन्तुं प्रवृत्ता। अस्मिन् समये तां प्रियताम् आलिङ्ग्य तस्याः कोपशान्त्यर्थं प्रियवाक्यशतैः यदा आश्वासयामि तदा शठः विधिः मम निद्राभङ्गं कृतवान्। एतादृशम् अकार्यं शठस्य विधेः एव इति अहं निश्चिनोमि इति काव्यार्थः।**

**अस्मिन् काव्ये विधिः आलम्बनविभावः, विधेः निद्राभङ्गरूपं कार्यम् उद्दीपनविभावः, शठत्वादिकथनम् अनुभावः; एतेषां संयोगात् विधिं प्रति असूयाभावः प्रधानरूपेण अभिव्यज्यते। अतः इदं भावध्वनेः उदाहरणम्।**

---

**बोधप्रश्नः**

१. अञ्जितव्यभिचारी इति पदस्य कः अर्थः?

२. अस्मिन् काव्ये कः व्यभिचारिभावः अभिव्यज्यते?

३. अत्र कथं विप्रलम्भशृङ्गाररसः नास्ति?

## १८.५ रसाभासभावाभासौ

### १८.५.१ रसाभासोदाहरणम्

भवन्तः शृङ्गारादिरसं जानन्ति। रसरूपस्य व्यङ्ग्यार्थस्य प्राधान्ये रसध्वनिः तथा भावादीनां प्राधान्ये भावादिध्वनिः इति च पठितवन्तः। इदानीं रसाभासविषये आलोचयामः। रसस्य आभासः रसाभासः। अर्थात् रसस्य छायामात्रं यत्र प्रतीयते तत्र रसाभासः। आलङ्कारिकाः कथयन्ति यथा रसानाम् अनौचित्यप्रयोगः रसाभासः इति। शुक्तौ रजतभ्रान्तिरिव यत्र रसानां वास्तविकः बोधः न भवति, तत्र रसाभासः कथ्यते। अभिनवगुप्तपादानां मते औचित्येन प्रवृत्तस्य स्थायिभावस्य आस्वादः रसः, व्यभिचारीभावस्य आस्वादः भावः, तथा अनौचित्येन प्रवृत्तस्य स्थायिभावस्य आस्वादः रसाभासः, व्यभिचारीभावस्य च भावाभासः इति। तदुक्तं ध्वन्यालोकलोचने–औचित्येन प्रवृत्तौ चित्तवृत्तेरास्वाद्यत्वे स्थायिन्सा रसो व्यभिचारिण्याभावः अनौचित्येन तदाभासः। इति।

मम्मटमते रसभावादीनाम् अनौचित्यप्रवर्तनं रसाभास–भावाभासव्यवहारः। साहित्यदर्पणकारस्य विश्वनाथराजस्य मते अपि तथैव। यत्र रसभावादीनां लक्षणं पूर्णतः सङ्गतं नैव भवति, विभावादीनां सामग्रीषु न्यूनता वा प्रतीयते तत्र रसादेः अनौचित्येन रसाभासः। तथैव भावस्यापि अनौचित्यात् भावभासः एव। तदुक्तम्–

**अनौचित्यप्रवृत्तत्व आभासो रसभावयोः। इति।**

रसगङ्गाधरकारः पण्डितराजजगन्नाथः रसस्य अनुचितविभावाद्यालम्बनं रसाभासः इति स्वीकरोति। तदुक्तं तेन-अनुचितविभावालम्बनत्वं रसाभासत्वम्। इति।

मम्मटमते अनौचित्यप्रवर्त्तिताः रसाभासाः भावाभासाश्च भवन्ति। अनौचित्यमपि बहुप्रकारकं भवति इति सामाजिकाः विचारयन्ति। यथा शृङ्गाररसस्य स्थायिभावस्य रत्यादेः अनौचित्यं विचार्यते यत् एकस्याः स्त्रियाः अनेकपुरुषैः सह प्रेमवर्णनम् अनौचित्यम् इति रसाभासः। तथैव गुरुजनानां विषये हास्यरसस्य प्रयोगः वीतरागमवलम्ब्य करुणरसस्य प्रयोगः, पित्राद्यालम्बनमाश्रित्य रौद्रवीरयोः रसयोः प्रयोगः, वीरपुरुषविषये भयानकरसस्य प्रयोगः, यज्ञियपशुवधाद्यालम्बनतया वीभत्सरसस्य प्रयोगः, ऐन्द्रजालिकालम्बनतया अद्‌भुतरसस्य प्रयोगः, चण्डालादिगतत्वेन च शान्तरसस्य प्रयोगः सर्वथा अनुचितः भवति। एतेषु स्थलेषु रसाभासत्वं बोध्यम्। अस्य उदाहरणं यथा–

**स्तुमः कं वामाक्षि! क्षणमपि विना यं न रमसे**
**विलेभे कः प्राणान् रणमखमुखे यं मृगयसे।**

**सुलग्ने को जातः शशिमुखि! यमालिङ्गसि बलात्।**
**तपः श्रीः कस्यैषा मदननगरि! ध्यायसि तु यम्॥ इति।**

कामपि सुन्दरीं वाराङ्गनां विलोक्य कस्यचित् कामुकस्य उक्तिः अत्र वर्णिता। कामुकः कथयति– हे सुन्दरनयने! वयं तं कं पुरुषं स्तुमः यं विना त्वं क्षणमपि न रमसे। कं वा पुरुषं त्वं मृगयसे यः युद्धयज्ञे निजप्राणान् उत्सर्गीकरोति। हे चन्द्रवदने! यं पुरुषं त्वं बलात् आलिङ्गसि, सुलग्ने जातः सः कः? हे मदननगरि! यं त्वं ध्यायसि सः कः? यस्य एवम्भूता तपोजन्या सम्पत्तिर्विद्यते। अस्मिन् पद्ये अनेककामुकविषयकः अभिलाषः प्रकाश्यते। तेन बहुनायकगतव्यापारः बोध्यते। तस्मादत्र शृङ्गाररसस्य आभासः अस्ति।

### १८.५.२ भावाभासोदाहरणम्

इतः पूर्वं कथितं यत् काव्ये यदि अनौचित्येन भावः वर्ण्यते तर्हि तत्र भावाभासः इति व्यवहारः। भावाभासस्य उदाहरणं यथा–

**राकासुधाकरमुखी तरलायताक्षी**
**सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी।**
**तत् किं करोमि विदधे कथमत्र मैत्रीं**
**तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥**

अत्र सीताम् उद्दिश्य रावणस्य उक्तिः वर्णिता। रावणः कथयति यत् इयं सा सीता या पूर्णचन्द्रानना वर्तते। यस्याः चञ्चले दीर्घे अक्षिणी या च विकसितनवयौवनतरङ्गैः विभ्रमाङ्गी। तस्मात् तस्याः लाभाय किं वा करोमि, तया सह केन उपायेन मित्रताम् आचरामि, एवं सति तया मम स्वीकृतिः अस्तु इति। केन वा उपायेन स्थापयामि।

अस्मिन् काव्ये चिन्तानामकः व्यभिचारिभावः अनौचित्येन प्रवृत्तः। तस्मात् अत्र भावाभासः स्वीक्रियते। तदुक्तं काव्यप्रकाशे–

---

**मूलग्रन्थः–**

**तदाभासा अनौचित्यप्रवर्त्तिताः। तदाभासा रसाभासा भावाभासाश्च।**

**तत्र रसाभासो यथा–**

**स्तुतः कं वामाक्षि! क्षणमपि विना यं न रमसे**
**विलेभे कः प्राणान् रणमखमुखे यं मृगयसे।**
**सुलग्ने को जातः शशिमुखि! यमालिङ्गसि बलात्**
**तपः श्रीः कस्यैषा मदननगरि! ध्यायसि तु यम्॥**

**अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति। भावाभासो यथा–**

**राकासुधाकरमुखी तरलायताक्षी**
**सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी।**
**तत्किं करोमि विदधे कथमत्र मैत्रीं**
**तत्स्वीकृतिव्यटिकरे क इवाभ्युपायः॥**

**अत्र चिन्ता अनौचित्यप्रवर्तिता। एवमन्येऽप्युदाहार्याः।**

---

**बोधप्रश्नः**

१. कः रसाभासः?

२. कः भावाभासः?

३. शृङ्गाररसाभासः कुत्र भवति?

## १८.६ भावशान्त्यादिध्वनिः

### १८.६.१ भावशान्तिः

काव्ये यत्र एकस्य भावस्य अभिव्यक्तौ समकालमेव अपरः भावः अभिव्यज्यते, तदा पूर्वस्य भावस्य प्रशमः भावशान्तिः कथ्यते। भावस्य शान्तिः भावशान्तिः अस्य उदाहरणं यथा–

**तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं**
**किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।**
**इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया**
**साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम्॥**

इदं पद्यम् अमरुशतके अस्ति। खण्डितानायिकायाः कोपशान्तिवृत्तान्तं मित्रं प्रति कश्चित् धृष्टः नायकः अत्र कथयति– धृष्टः नायकः अन्यस्याः नायिकायाः सम्भोगेन स्वगृहं प्रति आगतः। तदा गृहे निजनायिका नायकस्य वक्षस्थले सम्भोगचिह्नानि विलोक्य कुपिता। अतः भयेन नायकः तानि सम्भोगचिह्नानि गोपयितुं यदा नायिकायाः पादयोः पतितः, तदा सा वदति– तस्याः निविडतया चन्दनादिविलेपितस्य स्तनतटस्य प्रकृष्टपरिरम्भेण तव वक्षस्थले यत् चिह्नं सञ्जातं, तत् चरणयोः प्राणच्छलेन किं गोपायते? इति उक्ते सति मया तत् सम्भोगचिह्नं विलोपयितुं सहसा तत् कुत्र इति उच्चार्य सा नायिका त्वरया आलिङ्गिता। आलिङ्गनानन्दपारवश्यात् च तया तन्व्या तत् चिह्नादिकं विस्मृतम् इति काव्यार्थः।

अस्मिन् काव्ये अन्यनायिकासम्भोगचिह्नं दृष्ट्वा स्वनायिकायाः कोपरूपः भावः अभिव्यज्यते। तत्क्षणादेव कोपः आलिङ्गनमात्रेण विस्मृतः इति कथनेन कोपभावस्य शान्तिः व्यङ्ग्यरूपेण प्रतीयते। अतः अत्र भावशान्तिध्वनिः।

### १८.६.२भावोदयः

काव्ये एकस्य भावस्य प्रशमनात् परम् अपरस्य भावस्य अभ्युदयेन यः चमत्कारः प्रतीयते, सः भावोदयः कथ्यते। भावस्य उदयः भावोदयः इति। भावस्य उदयेन व्यङ्ग्यार्थस्य प्राधान्यात् भावोदयध्वनिः भवति। अस्य उदाहरणं यथा–

**एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया**
**सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि।**
**आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं**
**मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः।। इति।**

इदं पद्यम् अमरूशतकात् संगृहीतम्। एकस्मिन् शयने कदाचित् नायकेन सपत्न्याः नाममात्रग्रहणं कृतम्। तत्क्षणादेव निकटे शयाना मुग्धा नायिका कोपेन खिन्ना अभूत्। तदा नायकः बहुविधानि प्रियभाषणानि अकरोत्। फलतः सा नायिका कोपावेशात् नायकं प्रति अवज्ञाम् अकरोत्। फलतः नायकः तूष्णीं स्थितवान्। तदानीं नायिका औत्सुक्येन नायकः सुप्तो वा न वा इति ज्ञातुं वारम्वारं नायकम् अवलोकयामास। अस्मिन् पद्ये– नायकः पुनर्वीक्षितः इति कथनेन नायिकागतस्य औत्सुक्यभावस्य उदयः व्यङ्ग्यरूपेण सहृदयान् आनन्दयति। अतः अत्र सुरतविषयस्य औत्सुक्यस्य उदयः चमत्करोति इति भावोदयध्वनिः। यद्यपि अत्र नायिकायाः कोपः शान्तः इति सूच्यते, तथापि अनुभावादीनाम् अभावात् भावशान्तिः इति न कथ्यते। औत्सुक्यस्य उदयस्य प्राधान्यात् भावोदयध्वनिरेव।

### १८.६.३ भावसन्धिः

यत्र काव्ये युगपत् द्वयोः भावयोः चमत्कारः समानतया प्रतीयते, तत्रैव भावसन्धिध्वनिः इति व्यवहारः। उदाहरणं यथा–

**उत्सिक्तस्य तपः पराक्रमनिधेरभ्यागमादेकतः**
**सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः।**
**वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्**
**आनन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः।। इति।**

महावीरचरितनाटके द्वितीये अङ्के इदं पद्यं दृश्यते। सीताम् आलिङ्गितस्य श्रीरामस्य परशुरामागमने इयम् उक्तिः। अहङ्कारस्य तपः पराक्रमयोश्च निधिस्वरूपः परशुरामः। तस्य आगमनेन एकतः तस्मिन् प्रियभावतः वीरोचितस्य उत्साहस्य उद्रेको जायते, अन्यतः नवपरिणीतायाः वैदेह्याः आश्लेषः। मुनिपार्श्वगमनं प्रति मां प्रतिबध्नाति। अत्र परशुरामस्य तपोनिधित्वं प्रति पराक्रमशालित्वं प्रति च रामस्य आवेगभावः जायते। वैदेह्याः आलिङ्गनं बारम्बारं रामस्य चैतन्यमपि विषयान्तरात् आवर्तयति। हरिचन्दनवत् इन्दुवत् च शीतलः स्पर्शः प्रेमसम्बलितश्च वैदेह्याः परिरम्भः रामस्य कृते आनन्दजनकः अस्ति। अतः युगपत् एव रामस्य आवेगभावः हर्षभावश्च प्रतीयते। अनयोः उभयोः मेलनेन भावसन्धिध्वनिः जायते।

### १८.६.४ भावशबलता

काव्ये यत्र एकः भावः अन्यैः अनेकैः भावैः सह युगपत् अभिव्यज्यते तदा भावशबलताध्वनिः भवति। भावानां शबलता भावशबलता। शबलताशब्दस्य अर्थः भवति यत्– अनेकवर्णानां मिश्रणता। भावशबलतायां भावाः एकत्र भवन्ति। ते च पूर्वपूर्वोपमर्देन उत्तरोत्तरं चमत्कारं जनयन्ति। उदाहरणं यथा–

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्यते सा
दोषाणां प्रशमायः नः श्रुतमहो कोपेऽपि कान्तं मुखम्।।

किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति।। इति।

इदं पद्यं विक्रमोर्वशीये नाटके चतुर्थेऽङ्के उर्वशीं दृष्ट्वा पुरुरवसः उक्तिरूपेण वर्णितम् इति जयन्तमहेश्वरनागोजीभट्टादयः कथयन्ति। मुनिकन्यायाम् आसाक्तिरूपम् अकार्यं क्व? चन्द्रस्य कुलञ्च क्व? पुनरपि सा अद्भुतसुन्दरी उर्वशी कथं दृश्येत? अस्माकं शास्त्रश्रवणं दोषाणां प्रशमाय भवति। अहो आश्चर्यम्, कोपेऽपि अस्य मुखं मनोहरम्। पण्डिताः किं पुनः वक्ष्यन्ति। स्वप्नेऽपि सा दुर्लभा। हे चेत! स्वास्थ्यम् उपेहि। कः खलु धन्यः युवकः, अस्याः अधरं पास्यति? इति काव्यार्थः।

अस्मिन् ग्रन्थे क्रमशः वितर्क-औत्सुक्य-मति-स्मरण-शङ्का-दैन्य-धृति-चिन्ताप्रभृतीनां व्यभिचारिभावानां व्यङ्ग्यत्वेन प्रतीतिः दृश्यते। एकत्र अनेकेषां भावानां युगपत् प्रतीतौ भावशबलताध्वनिः।

---

मूलग्रन्थः–

भावस्य शान्तिरुदयः सन्धिः शबलता तथा।

क्रमेणोदाहरणम्–

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम्।।

अत्र कोपस्य।

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः।।

अत्रौत्सुक्यस्य।

उत्सिक्तस्य तपः पराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालञ्च मां कर्षतः।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः।।

अत्र आवेगहर्षयोः।

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषा कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति।।

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता। भावस्थितिस्तूक्ता उदाहृता च।

**बोधप्रश्नः**

१. कः भावशान्तिध्वनिः कथ्यते ?

२. भावोदयध्वनेः लक्षणं किम् ?

३. कः भावसन्धिध्वनिः ?

४. भावशबलताध्वनेः स्थलं कुत्र ?

## १८.७ रसमुख्यतायामपि भावशान्त्यादेः अङ्गित्वम्

काव्यप्रकाशकारः भावादिध्वनिं निरूप्य अन्ते एकां शङ्कामुपस्थापयति। तच्च भावशान्तिप्रभृतिध्वनिस्थले अवश्यमेव कस्यचित् रसस्य प्रतीतिः भवति। तदा रसप्रीतिमवलम्ब्य तत्र रसध्वनिरिति व्यवहारः भवतु; कुतः भावशान्त्यादिध्वनिः इति जिज्ञासा। अस्य समाधानेन मम्मटः स्पष्टयति यत् भावशान्त्यादिस्थले रसस्य मुख्यत्वं यद्यपि वर्तते तथापि कदाचित् भावशान्त्यादि अङ्गिरूपत्वं प्राप्नोति। यथा लौकिकमुदाहरणं दातुं शक्नुमः। यथा कस्यचित् राज्ञः भृत्यस्य विवाहोत्सवे दृश्यते। तत्र राजा यद्यपि मुख्यः तथापि विवाहावसरे भृत्यस्य मुख्यता प्रतिपाद्यते। तत्र राजा गौणः भवति। तथैव भावशान्त्यादिध्वनिस्थले भावशान्त्यादेः मुख्यत्वं रसस्य च गौणरूपेण अवस्थितिः स्वीक्रियते।

---

**मूलग्रन्थः**

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन।**

**ते भावशान्त्यादयः। अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत्।**

---

**बोधप्रश्नः**

१. भावशान्त्यादेः अङ्गित्वं कथं भवति ?

## १८.८ सारांशः

इत्थं भवन्तः काव्यप्रकाशस्य चतुर्थे उल्लासे भावादिध्वनिनिरूपणप्रकारं पठितवन्तः। अनेन भवतां भावादिध्वनिविषये ज्ञानं जातम्। भवन्तः इदं वक्तुं शक्नुवन्ति यत् मम्मटः काव्यप्रकाशे ध्वनिनिरूपणावसरे ध्वनिकारम् आचार्यमानन्दवर्धनमनुसरति इति।

भवद्भिः ज्ञातं यत् व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिरिति। अतः वस्तु-अलङ्कार-रसरूपेण व्यङ्ग्यार्थस्य त्रैविध्यात् ध्वनेरपि त्रैविध्यम् आलोचितम्। तत्र रसपदेन आस्वादयोग्यतया भावादयोऽपि गृह्यन्ते। भावादयः रसपदवाच्याः भवन्ति इत्यर्थः। तस्मात् रसध्वनिवत् काव्ये भावध्वनीनामपि प्राधान्यमस्ति। भावध्वनिविषये मम्मटस्याभिप्रायः यत् देवादिविषया रतिः अञ्जितः व्यभिचारी च भावध्वनिरूपेण गृह्यते। अस्मिन् प्रसङ्गे अनौचित्येन प्रवर्त्तिताः रसाभासादयः अपि स्वीक्रियन्ते। अर्थात् अनौचित्यप्रवर्त्तितरसः रसाभासः। अनौचित्यप्रवर्त्तितः भावः भावाभासः। भावस्य प्रशमनं भावशान्तिः। भावस्य उदयः भावोदयः। द्वयोः भावयोः सन्धिः भावसन्धिः। अनेकभावानाम् एकत्राभिव्यक्ति भावशबलताश्च इति कथ्यन्ते।

## १८.९ शब्दावली

१. अञ्जतः – अञ्ज् + क्त। अभिव्यक्तः।

२. रतिः – रम्+क्तिन्। शृङ्गाररसस्य स्थायिभावः।

३. भावः – भू भावे घञ्। नाट्यशास्त्रप्रणेतुः भरतमुनेः मतानुसारं भावो मनसो विकारः। तदुक्तम्–वागङ्गसत्त्वोपेतान्काव्या-र्थान् भावयतीति भावाः इति। काव्यशास्त्रे भावस्य प्रयोगः व्यापकः। भावस्य परिपक्वावस्था रसः। विशेषार्थे भावस्य अर्थत्रयम्–

क. प्रधानतया व्यञ्जितः निर्वेदादिः व्यभिचारिभावः (३३ संख्यकः)

ख. देवादिविषयकः रतिभावः।

ग. उद्बुद्धमात्रः स्थायीभावः। तदुक्तं साहित्यदर्पणे–

सञ्चारिणः प्रधानानि देवादिविषयरतिः।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते।। इति।

४. भावध्वनिः – देवादिविषया रतिः भावः कथ्यते। किञ्च अभिव्यक्तः व्यभिचारी भावोऽपि भाव इति स्वीक्रियते। यत्र एवम्भूतः व्यङ्ग्यार्थः प्रधानः तत्रैव भावध्वनिः।

५. रसाभासः – रसवत् आभासः। यत्र अनौचित्येन प्रवर्त्तितो भवति रसः तत्र रसाभासः।

६. भावाभासः – अनौचित्यप्रवर्त्तितः भावः भावाभासः।

७. भावशान्तिः – भावस्य शान्तिः भावशान्तिः।

८. भावोदयः – भावस्य उदयः भावोदयः।

९. भावसन्धिः – द्वयोः भावयोः समानतया प्रतीतिः।

१०. भावशबलता – अनेकभावानां युगपदेकत्र प्रकाशनं भावशबलता।

## १८.१० सन्दर्भग्रन्थः

१. साहित्यदर्पणम्

२. ध्वन्यालोकः

३. काव्यप्रकाशः

४. संस्कृतकाव्यतत्त्वविचारः

## १८.११ सहायकग्रन्थः

१. काव्यप्रकाशः (झल्कीकरवामनः, भण्डारकरओरिएण्टलइन्स्टिच्युट्, पुणे, १९५०)

२. काव्यप्रकाशः (मणिव्याख्यासहितः) डा. सूर्यमणिरथः, पुरी, २००४

३. संस्कृतकाव्यतत्त्वविचारः-अध्यापिका केतकीनायक, पुरी, १९९७

४. संस्कृत-हिन्दीकोश-वामनशिवराम आप्टे, दिल्ली, २००६

५. भारतीयसाहित्यशास्त्रकोश-डा. राजवंश सहाय हीरा, पटना, १९७३

## १९.१२ बोधप्रश्नोत्तराणि

१. भावादिध्वन्यः रसध्वनौ अन्तर्भवन्ति। यतः भावादयः रसनधर्मयोगित्वात् रसपदवाच्याः सन्ति। भावादिषु आस्वादनयोग्यता वर्तते। तस्मात् भावादिध्वनयः सर्वेऽपि रसनात् रसादिध्वनौ अन्तर्भवन्ति।

२. काव्यप्रकाशकारस्य मम्मटस्य मते कान्ताविषयभिन्ना रतिः भावध्वनिः भवति। कान्ताविषयरतिस्तु शृङ्गाररस इति कथ्यते। मम्मटमते कान्ताविषयाद्भिन्ना रतिरिति कथनेन देव-मुनि-गुरु-नृप-पुत्रादिविषया रतिरिति अर्थः जायते। किञ्च मम्मटमते अञ्जितः व्यभिचारीभावोऽपि भावध्वनि इति कथ्यते। व्यभिचारिभावाः त्रयस्त्रिंशत् (३३) संख्याकाः सन्ति। अतः यत्र एतेषु कश्चिद् व्यभिचारिभावः प्रधानरूपेण अभिव्यक्तर्भवति तत्रापि भावध्वनिरिति व्यवहारः।

३. मम्मटमते शृङ्गाररसस्य भावध्वनेश्च कश्चिद्भेदः वर्तते। शृङ्गाररसस्य स्थायिभावरूपेण कान्तादिविषया रतिः वर्तते। तस्मात् यत्र काव्य कान्तादिविषया रतिः प्राधान्येन अभिव्यज्यते, तत्रैव शृङ्गाररसः अभिव्यक्तो भवति। किन्तु यदि कान्ताविषयभिन्ना रतिः अर्थात् मुनिगुरुनृपपुत्रादिविषया रतिः अभिव्यज्यते तर्हि तत्र मम्मटमते भावध्वनेः शृङ्गाररसस्य च भेदः परिकल्पितः।

४. अञ्जितव्यभिचारी इति पदस्य अयमेवार्थः प्रतीयते यत् यत्र व्यभिचारी भावः प्रधानरूपेण अभिव्यक्तो भवति तत्रापि मम्मटमते भावध्वनिरेव इत्यर्थः।

५. जाने कोपपराङ्मुखी प्रियतमा ... इत्यादिपद्ये विधिं प्रति असूयाभावः प्रधानरूपेण अभिव्यज्यते।

६. जाने कोपपराङ्मुखी प्रियतमा ... इति पद्ये विप्रलम्भशृङ्गाररसः नास्ति। कारणं विप्रलम्भशृङ्गाररसस्य स्थायीभावः रतिः अत्र न प्रधानतया अभिव्यज्यते। अपि तु असूयानामकः व्यभिचारीभावः प्रधानरूपेण अभिव्यक्तो भवति। तस्मात् इदं काव्यं भावध्वनिकाव्यमिति संगच्छते।

७. रसस्य आभासः रसाभासः। अर्थात् रसस्य छाया यत्र प्रतीयते तत्र रसाभास इति व्यवहारः। आलङ्कारिकाणां मते अनौचित्येन प्रवर्त्तितः रसः रसाभास इति कथ्यते।

८. रसाभासवद्भावाभासोऽपि काव्यशास्त्रे गृह्यते। यत्र काव्ये अनौचित्यरूपेण भावः वर्ण्यते। तर्हि तत्र भावाभास इति व्यवहारः। तदुक्तं काव्यप्रकाशे- तदाभासा अनौचित्यप्रवर्त्तिता इति।

९. यस्मिन् काव्ये शृङ्गारादिकस्य रसस्य अनौचित्यरूपेण प्रवर्तनं क्रियते तदेव शृङ्गाररसाभास इति कथ्यते।

१०. यस्मिन् काव्ये कस्यचित् भावस्य प्रशमः जायते तत्र भावशान्तिध्वनिरिति

व्यवहार: क्रियते। भावशान्तिध्वनौ यत्र समकालमेव भावद्वयो: अभिव्यज्यते तदा पूर्वस्य भावस्य प्रशमनं जायते। अत: तदैव काले भावशान्तिध्वनिरिति व्यवहार:।

११. भावस्य उदय: भावोदय: इति कथ्यते। भावस्य उदयेन व्यङ्ग्यार्थस्य प्राधान्यात् भावोदयध्वनिरिति व्यवहार:।

१२. यत्र काव्ये युगपदेव द्वयो: भावयो: समानतया चमत्कार: अभिव्यज्यते तत्रैव भावशान्तिध्वनिरिति व्यवहार:।

१३. यत्र एको भावोऽपरैरनेकै: भावै: सह युगपदभिव्यज्यते तत्रैव भावशान्तिध्वनिरिति व्यवहार:।

१४. गोबलीवर्दन्यायेन भावशान्त्यादे: अङ्गित्वं विचार्यते। यद्यपि काव्ये रस: अङ्गी भवति तथाऽपि कदाचित् भावानामपि अङ्गीत्वं जायते। यथा-राजानुगतविवाहप्रवृत्तभृत्यवत् इति।

## १८.१२ अभ्यासप्रश्ना:

१. मम्मटमतानुसारं भावध्वने: परिचय: लिख्यताम्।

२. भावध्वने: शृङ्गाररसस्य भेदं वर्णयत।

३. काव्ये रसाभासस्य स्थलं निरूप्यताम्।

४. क: भावाभास: ? काव्यप्रकाशानुसारं भावाभासस्य लक्षणं लिख्यताम्।

५. का भावशान्ति: ? क: भावोदय:?

६. भावसन्धे: क: परिचय:?

७. भावशबलता कथं जायते? इति प्रतिपाद्यताम्।

---

# एकोनविंशः पाठः ( संलक्ष्यक्रमध्वनिः )

## पाठसंरचना



## १९.१ प्रस्तावना

अत्र काव्यप्रकाशस्य एकोनविंशपाठे भवतः स्वागतम्। इतः पूर्वं भवान् काव्यस्यात्मा ध्वनिः इति विषये पठितवान्। भवान् ध्वन्यालोकस्य द्वितीये उद्द्योते विद्यमानां कारिकामिमां स्मरतु–

**असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितः परः।**
**विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः।। इति।**

भवद्भिः ज्ञातं यत् वाच्यार्थप्रतीतेः परं व्यङ्ग्यार्थस्य प्रतीतौ कश्चित् क्रमः वर्तते। स च क्रमः यत्र लाघवात् न लक्ष्यते, तत्र अलक्ष्यक्रमव्यङ्ग्य नाम रसादिध्वनिः कथ्यते। यत्र पुनः स क्रमः संलक्ष्यते तत्र संलक्ष्यक्रमव्यङ्ग्यध्वनिरिति व्यवहारः। इदमपि पूर्वं काव्यप्रकाशे चतुर्थे उल्लासे भवद्भिः पठितम्। यथा–

**कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः इति।**

तत्र संलक्ष्यक्रमः इति कथनेन वाच्यार्थबोधनात्परं विलम्बेन व्यङ्ग्यार्थस्य बोधः स्पष्टतया संलक्ष्यते। अयं संलक्ष्यक्रमव्यङ्ग्यः अनुस्वानाभः इति कथ्यते। यदा घण्टानादः क्रियते तदा प्रधानशब्दश्रवणात्परं क्रमशः अपरः अनुरणरूपः स्वनः श्रूयते। अयमेव अनुस्वानः ध्वन्यादिपदेन परिचितः। तस्य अनुस्वानस्य सदृशः संलक्ष्यते इति अनुस्वानाभः अयं संलक्ष्यक्रमव्यङ्ग्यध्वनिः इति कथ्यते। यथा ध्वनिप्रतिध्वन्योः क्रमः लक्ष्यते, तथा वस्तु-अलङ्कृति-तद्व्यञ्जकयोः क्रमश्च लक्ष्यते इति भावः। एवंभूतः यः ध्वनिः सः शब्दशक्तिमूलः अर्थशक्तिमूलः उभयशक्तिमूलश्चेति त्रिविधो भवति। इदं च भवद्भिः स्पष्टरूपेण ज्ञातव्यं यद् रसध्वनिः असंलक्ष्यक्रमव्यङ्ग्यध्वनिरिति व्यवह्रियते। वस्तुध्वनिः अलङ्कारध्वनिश्च इति ध्वनिभेदद्वयं संलक्ष्यक्रमव्यङ्ग्यान्तर्गतं भवति। इदमपि भवन्तः साहित्यदर्पणे तृतीये परिच्छेदे पूर्वं पठितवन्तः। यथा–

**विविक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः।**
**अंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा।। इति।**

**तत्राद्यो रसभावादिरेक एवात्र गण्यते।**
**एकोऽपि भेदोऽनन्तत्वात्संख्येयस्तस्य नैव यत्।। इति।**

**शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानन्निभे।**
**ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः।। इति।**

(साहित्यदर्पणः - 3/4-6)

## १८.२ उद्देश्यम्

अस्य पाठ्यस्याध्ययनेन भवन्तः–

- संलक्ष्यक्रमव्यङ्ग्यध्वनिविषये सम्यक् ज्ञानमर्जयिष्यन्ति।
- संलक्ष्यक्रमव्यङ्ग्यध्वनेः भेदत्रयमस्ति इति ज्ञास्यन्ति।
- शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्य स्वरूपं ज्ञास्यन्ति।
- शब्दशक्त्युद्भवध्वनेः वस्तुध्वनिः अलङ्कारध्वनिरिति भेदद्वयं ज्ञातुं प्रभविष्यन्ति।
- अर्थशक्त्युद्भवध्वनेः स्वतः सम्भवी कविप्रौढोक्तिसिद्धः कविनिबद्धवक्तृप्रौढोक्ति-सिद्धश्चेति भेदान् पठिष्यन्ति।
- उभयशक्यत्युद्भवध्वनेः एक एव इति मम्मटस्य अभिप्रायं प्रकटयितुं समर्थाः भविष्यन्ति।

## १९.३ संलक्ष्यक्रमव्यङ्ग्यध्वनेः त्रैविध्यम्

### १९.३.१ शब्दशक्त्युद्भवः

भवन्तः जानन्ति यत् संलक्ष्यक्रमव्यङ्ग्यध्वनेः आद्यभेदः शब्दशक्त्युद्भवध्वनिः इति। अयं च शब्दशक्तिमूलानुरणनरूपव्यङ्ग्य इति कथ्यते। तत्र शब्दपरिवृत्त्यसहत्वेन शब्दशब्दशक्तिमूलत्वमिति व्यवहारः। अर्थात् शब्दस्य परिवर्तनेन अर्थबोधने क्लेशः। कारणं तेनैव शब्देन तस्यैवार्थस्य बोधः जायते। न तु पर्यायान्तरस्य अर्थस्य बोधो भवति। तस्मात् शब्दपरिवर्तनस्य असह्यरूपत्वं विचार्य शब्दशक्त्युद्भवध्वनिः परिकल्पितः। मम्मटमते यत्र परिवृत्त्यसहरूपात् शब्दात् प्रधानरूपेण कस्यचित् अर्थालङ्कारस्य वस्तुमात्रस्य वा अभिव्यक्तिः जायते। तत्रैव शब्दशक्त्युद्भवध्वनेः स्थलम्। इदमपि जानन्तु भवन्तः यत् आनन्दवर्द्धनमते शब्दशक्तिमूलध्वने अलङ्कारगतत्वेन एक एव भेदः वर्तते, किन्तु मम्मटमते शब्दशक्त्युद्भवध्वनेः अलङ्काररूपेण वस्तुरूपेण च भेदद्वयं वर्तते इति।

ध्वनिकारः आनन्दवर्द्धनः शब्दशक्त्युद्भवध्वनेः वस्तुगतभेदं नैव स्वीकरोति। स केवलमलङ्कारगतं भेदं वदति। यथा–

**आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।**
**यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः।।** इति।

मम्मटस्तु शब्दशक्त्युद्भवध्वनेः वस्त्वलङ्कारभेदाभ्यां द्विधा प्रतिपादयति। साहित्यदर्पणकारः विश्वनाथोऽपि एतत्समर्थयति यथा– वस्त्वलङ्काररूपत्वात् शब्दशक्त्युद्भवौ द्विधा इति। (सा.द. ३/७)।

साररूपतया एतज्जानन्तु यत् शब्दशक्त्युद्भवध्वनौ व्यङ्ग्यार्थस्य बोधः येन शब्देन भवति स एव शब्दः ध्वनेः व्यञ्जकः। तस्य शब्दस्य पर्यायवाचिशब्दद्वारा व्यङ्ग्यार्थबोधः न सम्भवति। अतः शब्दपरिवर्तनं न सहते अयम्। तस्मात् शब्दशक्त्युद्भव-ध्वनिरिति नाम यथार्थतां गतमस्ति।

### १९.३.२ अलङ्कारध्वनिः

काव्यप्रकाशकारः शब्दशक्त्युद्भवध्वनेः भेदद्वयं सूचयन् आह–

**अलङ्कारोऽथ वस्त्वैव शब्दात् यत्रावभासते।**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा।।** इति।

काव्ये यत्र व्यङ्ग्यार्थः अलङ्काररूपमर्थं द्योतयति तत्रैव अलङ्कारध्वनिः इति व्यवहारः क्रियते। एतस्य उदाहरणं यथा–

**उल्लास्य कालकरवालमुखाम्बुवाहं**
**देवेन येन जठरोर्जितगर्जितेन।**
**निर्वापितः सकल एव रणे रिपूणां**
**धाराजलैस्त्रिजगति ज्वलितः प्रतापः।। इति।**

अस्मिन् काव्ये अर्थद्वयं वर्तते। प्रथमः अर्थः राजपक्षे द्वितीयश्च अर्थः मेघपक्षे। राजपक्षे अयमर्थः भवति यत्– अयं राजा अतितीक्ष्णकालरूपकं करवालं भयङ्करगर्जनेन सह युद्धभूमौ शत्रूणामुपरि तथा न्यपादयत् यथा शत्रूणां सहसा एव प्रतापाग्निः निर्वापितो बभूव। द्वितीयतः मेघपक्षे अयमर्थः भवति यत् अयं मेघः कृष्णवर्णस्य जलप्रवाहं वृक्षगर्जनरूपकं पृथिव्यां न्यापादयत्। यथा पूर्वं पृथिव्यां विद्यमानस्य ज्वलितप्रतापस्य सूर्यस्य उष्णता विनष्टा। अत्रैव काव्ये राजाविषयकः अर्थः प्राकरणिकः। मेघविषयकस्त्वर्थः अप्राकरणिकः। प्राकरणिकेन अर्थेन सह अप्राकरणिकस्यार्थः असम्बन्धितः। तस्मात् उभयोः मध्ये उपमानोपमेयभावः परिकल्पितः। अतएव काव्येऽस्मिन् उपमालङ्कारः व्यङ्ग्यः। फलतः देवः मेघः देवः राजा इव अस्ति इति। एवमेव मम्मटः उपमालङ्कारस्य व्यङ्ग्यत्वं प्रदर्श्य विरोधाभासमलङ्कारं प्रतिपादयति। तत्र विरोधाभासस्यापि अलङ्कारस्य व्यङ्ग्यत्वं वर्तते इत्यर्थः। उदाहरणं यथा–

**तिग्मरुचिरप्रतापः विधुरनिशाकृद् विभो मधुरलीलः।**
**गतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान्।। इति।**

अत्र कश्चित् चाटुकारः राजानं वदति हे विभो! भवान् शोभते। कीदृशः शोभते? तीग्मरुचिः अप्रतापः इति। अर्थात् खलेषु जनेषु तीक्ष्णस्वभावः सुजनेषु रुचिरः प्रतापः दण्डादिजनितं तेजः तवेत्यर्थः। भवान् विधुः। अर्थात् चन्द्रः। किन्तु अनिशाकृत्। भवान् मधुः अर्थात् वसन्तकालः, किन्तु लीलारहितः। भवान् मतिमान्, किन्तु अतत्त्ववृत्तिः। भवान् प्रतिपद्, किन्तु कृष्णस्य शुक्लस्य वा पक्षस्य प्रथमः दिवसः न। अतोऽत्र विरोधः प्रतीयते। कारणं यः तिग्मरूपः सः अवश्यं प्रतापवान् भवेत्। तथैव यः विधुः सः निशाकरः, यः मधुः नाम वसन्तकालः सः लीलाकरः, यः मतिमान् सः तत्त्ववित्, यः प्रतिपत् सः नूनं शुक्लस्य कृष्णस्य वा पक्षस्य अग्रणीदिवसः भवेत्। अतः अत्र विरोधाभासोऽस्ति। अर्थान्तरस्य प्रतिपादनेन विरोधस्य परिहारोऽपि जायते। यथा– हे राजन्! भवान् शत्रूणां कृते तीक्ष्णः, मित्राणां कृते निशाकरः अर्थात् मृत्युस्वरूपः, भवान् मतिमान् तथा तत्त्वे नाम परब्रह्मणि सर्वदा विहरति, भवान् प्रतिपदं स्वपक्षस्य जनानां कृते अग्रणीः भवति। अस्मिन् काव्ये पदभङ्गेन विरोधः प्रतीयते। अतः मम्मटः आह– अत्र एकस्य पदस्य द्विपदत्वे विरोधाभासः इति।

अभङ्गश्लेषमूलकस्य विरोधालङ्कारध्वनेः उदाहरणं यथा–

**अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो!**
**अहितः सहितः साधुयशोभिरसतामसि।। इति।**

अत्र चाटुकारः राजानं वदति– हे हर्षद! अमितः समितश्च भवान् अहितः सहितश्च इति कथनेन विरोधाभासः। शत्रूणां कृते हर्षं खण्डयति इति हर्षदः। अर्थात् शत्रुहर्षखण्डतः मित्रणां कृते हर्षं ददातीति हर्षदः। अर्थात् मित्रहर्षदायकः। समितः अर्थात् संग्रामात्प प्राप्तैः उत्कर्षैः भवान् परिच्छिन्नरहितः अर्थात् अपरिमेयः। अशतां कृते अहितः अर्थात् दण्डविधायकत्वेन शत्रुः। साधुभिः यशोभिः भवान् सहितः युक्तः असि।

अत्र अमितः अर्थात् परिणामशून्यः अथ च समितः अर्थात् परिणामसहितः इति कथनेन प्रथमः अर्थः अभिधया बुध्यते। अतः प्रकरणादिना द्वितीयार्थस्य विरोधः व्यङ्ग्यतया न क्रियते इति अत्र अलङ्कारध्वनिः।

काव्यप्रकाशकारः व्यतिरेकालङ्कारध्वनेः अपि उदाहरणमुपस्थापयति। यथा–

**निरुपादानसम्भारमभित्तावेव तन्वते।**
**जगच्चित्रं नमस्तस्मै कलाश्लाध्याय शूलिने॥ इति।**

इदं पद्यं काश्मीरिकनारायणभट्टप्रणीते स्तवचिन्तामणिग्रन्थे वर्तते। तत्र शूलिने महादेवाय नमः इति मुख्यवाक्यार्थः। कीदृशाय शूलिने इति जिज्ञासा। चित्रकलानिर्माणे श्लाध्याय तस्मै महादेवाय नमः। कश्चित् चित्रकारः चित्ररचनासमये तूलिकादिकमुपकरणं व्यवहरति। तत्र चित्ररचनायै भित्तिप्रभृतेः आधारस्य अपेक्षा अस्ति। किन्तु विचित्रः अयं चित्रकारः भगवान् शिवः यः उपकरणैः विना शून्ये एव नानाकारं जगच्चित्रं विस्तारयति।

अस्मिन् काव्ये सामान्यचित्रकारापेक्षया उपकरणैः विना चित्रं कुर्वतः भगवतः शिवस्य आधिक्यं व्यज्यते। तस्मादत्र उपमानात् यदन्यस्य व्यतिरेकः स एव सः इति व्यतिरेकालङ्कारलक्षणादत्र व्यतिरेकालङ्कार एव व्यङ्ग्यः। व्यतिरेकस्य वाचकपदम् अधिकम् इति नैव उक्तम्। अत्र अस्य व्यङ्ग्यार्थस्य कविगतशिवविषयरतिं प्रति गुणत्वं नास्ति। अतः अत्र व्यङ्ग्य व्यतिरेकालङ्कारः प्रधानतया अभिव्यज्यते इति व्यतिरेकालङ्कारध्वनिः।

### १९.३.३ वस्तुध्वनिः

ग्रन्थकारः शब्दशक्त्युद्भवध्वनेः आद्यभेदमलङ्कारध्वनिं प्रतिपाद्य वस्तुध्वनिं प्रदर्शयति। यत्र व्यङ्ग्यार्थः केवलं वस्तुरूपकमर्थं द्योतयति तत्रैव वस्तुध्वनिः भवति। वस्तुध्वनौ अलङ्काररूपस्य अर्थस्य प्रकाशनं न भवति। प्रसङ्गेऽस्मिन् जिज्ञासा जायते यत् वस्त्वलङ्कारयोः भेदः कथं क्रियते? अलङ्कारः वस्तु इति कथ्यते किल? अतः ग्रन्थकारः वृत्तिवाक्ये उल्लिखति यत्– वस्तु एवेति अनलङ्कारवस्तुमात्रम् इति। अत्र अलङ्कारभिन्नं वस्तु इत्यर्थः। एवञ्च गोवलिवर्दन्यायेन वस्त्वलङ्कारयोः भेद इति भावः। शब्दशक्त्युद्भव वस्तुध्वनेः उदाहरणं यथा–

**पथिक! नात्र स्त्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे।**
**उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस॥ इति।**

अत्र वर्षाकाले कमपि विरहिपथिकं काचित् दूती स्वयं वदति- हे पथिक! प्रस्तरखण्डानां परिपूर्णस्थले अस्मिन् ग्रामे अल्पमपि कटादिकमास्तरणं नास्ति। अत्र सर्वत्र प्रस्तरमयत्वात् तृणादीनां दुर्लभत्वमित्यर्थः। तस्मात् शयनार्थम् आस्तरणादिसामग्र्‍यभावात् अत्र स्थातुं न शक्यते। तथापि आकाशे समुन्नतं मेघं दृष्ट्वा यदि वससि तदा वस इति। अयमेव अत्र वाच्यार्थः। अस्मात् वाच्यार्थात् कश्चित् चमत्कारजनकः व्यङ्ग्यार्थः अभिव्यज्यते यत्- हे पथिक! अस्मिन् ग्रामे प्रस्तरसदृशाः मूर्खाः कामशास्त्रानभिज्ञाः जनाः निवसन्ति। मम उन्नतमर्थात् अनुपभुक्तं पयोधरं तादृशमुद्दीपनं मेघं च दृष्ट्वा यदि उपभोगक्षमः असि तदा तिष्ठ इति। अत्र पयोधरः, स्रस्तरम् इति च शब्दद्वयं परिवृत्त्यहत्वेन वर्तते। अस्य शब्दद्वयस्य परिवर्त्तनेन व्यङ्ग्यार्थः न प्रतीयते। अतः अयं शब्दशक्तिमूलवस्तुध्वनिः भवति। दूत्याः अभिप्रायः वस्तुरूपेण वर्तते इति नात्र अलङ्कारध्वनिः, अपि तु वस्तुध्वनिरिति व्यवहारः।

ग्रन्थकारः अलङ्कारद्वारा उपस्कृतं वस्तुध्वनिं संस्कृतकाव्यात् उदाहरति–

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र!
यस्मै त्वमत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च॥ इति।

अस्मिन् पद्ये कश्चित् चाटुकारः राजानं वदति– हे नरेन्द्र! त्वं यस्मै कुप्यसि तं शनिश्चरः वज्रं च उच्चैः निहन्तिः त्वं पुनः यं प्रति प्रसीदसि, सः जनः महान् भवति। स एव जनः संसारे महान् दाता इति जायते।

अस्मिन् काव्ये पूर्वार्धे शनिः अशनिः च इति कथनेन अशनिशब्दात् शनिभिन्नः वज्रः इत्यर्थः अभिप्रेतो वर्तते। तस्मात् अशनिशब्दात् मारणरूपकं वस्तु शब्दशक्तिद्वारा व्यज्यते। अत्र काव्यस्य उत्तरार्धे वस्तुध्वनिः नास्ति। अपि तु विरोधालङ्कारः वर्तते। शनिरशनिश्च इत्यस्मिन् पदे विरोधात् विरोधालङ्कारः काव्यशोभां वर्द्धयति।

---

मूलग्रन्थः–

अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः॥

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यः उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः। तत्र

अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा॥

वस्त्वेवेति अनलङ्कारं वस्तुमात्रम्। आद्यो यथा–

उल्लास्य कालकरवालमुखाम्बुवाहं देवेन येन जठरोर्जितगर्जितेन।
निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः॥ इति।

अत्र वाक्यस्यासंबद्धार्थाभिधायकत्वं मा प्रसाक्षीदिति प्राकरणिका. प्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालङ्कारो व्यङ्ग्यः।

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान्॥

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो!
अहितः सहितः साधुयशोभिरसतामसि॥

अत्रापि विरोधाभासः।

निरुपादानसम्भारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाध्याय शूलिने॥

अत्र व्यतिरेकः।

अलङ्कार्यस्यापि ब्राह्मणश्रमणन्यायेनालङ्कारता।

वस्तुमात्रं यथा–

पंथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले ग्रामे।
उण्ण अप ओहरं पेक्खिऊण जइ वयसि ता वससु॥

अत्र यद्युपभोगक्षमोऽसि तदा आस्वेति व्यज्यते।

**शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र!**
**यस्मै त्वमत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च॥**

**अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते।**

---

**बोधप्रश्नः**

१. संलक्ष्यक्रमव्यङ्ग्यध्वनेः प्रमुखभेदाः के?

२. शब्दशक्त्युद्भवध्वनेः स्वरूपं किम्?

३. वस्त्वेवेति अनलङ्कारं वस्तुमात्रम्-इति कथनस्य किं तात्पर्यम्?

## १९.४ ब्राह्मणश्रमणन्यायः

काव्यप्रकाशकारः व्यतिरेकालङ्कारध्वनेः उदाहरणरूपेण-निरुपादानसम्भारं... इत्यादिपद्यं पूर्वमुदाहृतवान्। तत्र यद्यपि व्यतिरेकालङ्कारः ध्वन्यते तथापि उपमाद्यलङ्कारः तत्र वर्तते। अत्र उपमाद्यलङ्कार्यः। किन्तु ब्राह्मणश्रमणन्यायेन उपमादीनामलङ्कारत्वम्। यथा कश्चित् ब्राह्मणः परवर्त्तिनि काले स्वयज्ञोपवीतादिकं विहाय श्रमणधर्मं (बोद्धभिक्षुः) अवलम्वते, तेन च पूर्वपरिचितैः जनैः स ब्राह्मण इति परिचितो भवति तथैव पूर्वमुपमाद्यलङ्कारः वाच्यरूपेण वर्तते। यद्यपि व्यङ्ग्यः भवति तथापि वाच्यालङ्काररूपत्वं स्वीकृत्य अलङ्कार इत्येव कथ्यते, न तु अलङ्कार्यः।

---

**मूलग्रन्थः**

**अलङ्कार्यस्यापि ब्राह्मणश्रमणन्यायेनाऽलङ्कारता।**

---

**बोधप्रश्नः**

१. ब्राह्मणश्रमणन्यायेन कस्य अलङ्कारता?

## १९.५ अर्थशक्त्युद्भवः

इतः पूर्वं संलक्ष्यक्रमव्यङ्ग्यध्वनेः शब्दशक्त्युद्भवः, अर्थशक्त्युद्भवः उभयशक्त्युद्भवः इति भेदत्रयं भवद्भिः ज्ञातम्। यत्र शब्दस्य परिवर्तनेन व्यङ्ग्यार्थप्रतीतौ बाधा भवति, तत्र शब्दशक्त्युद्भवध्वनिः भवति इति आलोचितम्। यत्र शब्दस्य परिवर्त्तनेनाऽपि व्यङ्ग्यार्थस्य बोधः जायते तत्रैव अर्थशक्त्युद्भवध्वनिः भवति। अस्य ध्वनेः भेदत्रयमस्ति। यथा- स्वतः सम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धश्चेति। एतेषां त्रयाणां प्रत्येकं भेदचतुष्टयं वर्तते। यथा- १. वस्तुना वस्तुध्वनिः २. वस्तुना अलङ्कारध्वनिः ३. अलङ्कारेण वस्तुध्वनिः ४. अलङ्कारेणालङ्कारध्वनिश्चेति। तस्मात् अर्थशक्त्युद्भवध्वनेः द्वादशभेदाः सन्ति। एतदपि भवद्भिः साहित्यदर्पणे पठितं यथा-

**वस्तु वालंकृतिर्वापि द्विधार्थः सम्भवी स्वतः।**
**कवेः प्रोढोक्तिसिद्धो वा तन्निबद्धस्य वेति षट्॥**

**षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः।**
**अर्थशक्त्युद्भवो व्यङ्ग्यो यान्ति द्वादशभेदताम्॥ इति।**

**(साहित्यदर्पणः ३/७-८)**

### १९.५.१ स्वतः सम्भवी

स्वतः सम्भवतीति इति स्वतः सम्भवी। काव्ये वर्णितः विषयः अथवा कविना प्रस्तुतः काव्यार्थः लोकव्यवहारे सम्भवति चेत् स्वतः सम्भवी इति ज्ञातव्यम्। अत्र अतिशयोक्तिः न विद्यते। अथवा स्वतः सम्भविकथावस्तु कविकल्पितमात्रं न भवति। स्वतः सम्भवीत्यस्य शब्दस्य अर्थः स्वयं समुत्पन्नः इति ज्ञातव्यम्।

अर्थशक्त्युद्भवध्वनेः प्रथमतः स्वतः सम्भवी इति भेदः प्राप्यते। अस्य पुनः चत्वारः भेदाः भवन्ति। यथा–

क. स्वतः सम्भविना वस्तुना वस्तुध्वनिः। अत्र वाच्यार्थः वस्तुरूपः, व्यङ्ग्यार्थः अपि वस्तुरूपः भवति।

ख. स्वतः सम्भविना वस्तुना अलङ्कारध्वनिः। अत्र वाच्यार्थः वस्तुरूपः व्यङ्ग्यार्थश्च अलङ्काररूपः।

ग. स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिः। अत्र वाच्यार्थः अलङ्काररूपः व्यङ्ग्यार्थश्च वस्तुरूपः।

घ. स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिः। अत्र वाच्यार्थः अलङ्काररूपः व्यङ्ग्यार्थोऽपि अलङ्कारध्वनिः।

ग्रन्थकारः क्रमशः एतेषां ध्वनिभेदानामुदाहरणमुपस्थापयति। यथा–

क. स्वतः सम्भविना वस्तुना वस्तुध्वनिः

अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः।
इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता।। इति।

अस्मिन् काव्ये कस्याश्चित् कन्यकायाः पुरतः तस्याः प्रस्तावितपत्युः गुणादिविषये काचित् सूचयति इति वर्ण्यते। हे पुत्रि! तव पतिः अलसानां शिरोमणिः धूर्त्तानां मध्ये अग्रणी किन्तु सः धनवान् अस्ति इति श्रुत्वा सा नताङ्गी प्रफुल्लितलोचना सञ्जाता इति काव्यार्थः। अत्र कन्यकायाः विवाहप्रसङ्गे भाविनः वरस्य गुणश्रवणात् प्रफुल्लविलोचनत्वं स्वाभाविकम्।

अत्र अलसशिरोमणिः इति कथनेन नायकः प्रवासे नायिकान्तरगृहे च गन्तुम् अनिच्छुकः इति, धूर्त्तत्वेन अन्यनायिकायाः गुणेषु अनासक्त इति, धनसमृद्धिमय इति कथनेन अयं सुखी इति अर्थः वस्तुरूपो भवति। अयं नायकः चतुरोऽस्ति। अनेन सह दाम्पत्यजीवनं सुखमयं भविष्यति। धनिकत्वात् पारिवारिकजीवने आर्थिककष्टं न भविष्यति। अतः वरस्य एतान् गुणान् श्रुत्वा कन्या प्रफुल्लविलोचना जाता। अत्र वाच्यार्थात्- मम एव उपभोग्यः अयं न अविग्धायाः इति वस्तुरूपः व्यङ्ग्यार्थः समाजिकेषु अभिव्यज्यते। अत्र कोऽपि अलङ्कारः नास्ति। अतः स्वतः सम्भविना वस्तुना वस्तुध्वनेः प्रकृष्टमुदाहरणमिदं भवति।

**ख. स्वतः सम्भविना वस्तुना अलङ्कारध्वनिः**

अस्मिन् ध्वनिभेदे वाच्यार्थः वस्तुरूपः व्यङ्ग्यार्थश्च अलङ्काररूपः भवतीति पूर्वमालोचितम्। उदाहरणं यथा–

**धन्यासि या कथयसि प्रियसंगमेऽपि**
**विस्रब्धचाटुकशतानि रतान्तरेषु।**
**नीवीं प्रति प्रणिहिते तुकरे प्रियेण**
**सख्य! शपामि यदि किंचिदपि स्मरामि॥ इति।**

अस्मिन् काव्ये रतिकथापरासु सखिषु मध्ये स्वप्रियतमस्यालापं कथितवतीं काञ्चित् प्रति नायिकायाः उक्तिः वर्ण्यते। हे सखि! त्वमेव धन्यो असि। विश्वासयुक्तानां प्रियवाक्यानां शतानि स्मृत्वा अत्र कथयसि। किन्तु हे सखि! अहं शपथपूर्वकं वदामि यत् मम प्रियतमः यदा नीवीबन्धमुन्मोचयितुं हस्तं प्रसारयति, ततः किं जायते इति वक्तुमहं न शक्नोमि।

प्रथमतः प्रियसङ्गमे एव विलक्षणानन्दमन्थरतया तत् कथनम् अशक्यम्। तत्रापि रतिकाले, तस्य च पुनः इदानीं स्मरणमिति एतत् आश्चर्यभूतमस्ति। अतः त्वं धन्या। अहं तु किञ्चिदपि न स्मरामि इति अहमधन्या इति काव्यार्थः। अत्र सखिभिः सह नायिकायाः आलापः स्तवः सम्भविवस्तुरूपः। अनेन स्वतः सम्भविना वस्तुना- त्वम् अधन्या, अहमेव धन्या इति व्यतिरेकालङ्कारः अभिव्यज्यते। सखी प्रियसङ्गमसमये चाटुकथादिकं स्मृत्वा रतान्तरेषु कथयितुं शक्नोति इति तस्याः प्रियसङ्गमः न तथा प्रगाढतरः। किन्तु नायिकाप्रियसङ्गमसमये ततः परं वा न किञ्चित्स्मरति इति तदीया रतिः उत्कृष्टतरा वर्तते। तस्मात् सख्याः रतेः अपेक्षया नायिकायाः रतेः अधिकता वर्णिता। तस्मादत्र व्यतिरेकालङ्कारः प्रधानरूपेण अभिव्यक्तः सहृदयहृदयमाह्लादयति। अतः स्वतः सम्भविना वस्तुना अलङ्कारध्वनिः काव्येऽस्मिन् वर्तते।

**ग. स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिः**

उदाहरणं यथा–

दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तिनिघ्नघनशोणितशोणशोचिः

**वीरैर्व्यलोकि युधि कोपकषायकान्तिः**
**काली कटाक्ष इव यस्य करे कृपाणः॥ इति।**

अस्मिन् काव्ये युद्धं कुर्वतः कस्यचित् राज्ञः खड्गः काल्याः कटाक्ष इव शत्रुपक्षैः वीरैः अवलोकितः। यः खड्गः युद्धभूमौ मदमत्तानां गन्धगजानां कपाटसदृशं विस्तीर्णं गण्डस्थलं प्रविश्य तत्र संशक्तहेतोः रक्तवर्णः दृश्यते। अर्थात् दर्पान्धानां गन्धगजानां कपोलस्थलविदारणेन खड्गः रक्तरञ्जितः दृश्यते।

अतः कोपेन युक्तायाः दुर्गायाः कटाक्षयुगलं रक्तवर्णयुक्तः खड्गः शोभते। अस्मिन् काव्ये काल्याः रक्तवर्णकटाक्ष इव खड्गः इति वर्णनात् उपमालङ्कारः स्वतः सम्भवी। अत्र न काचित् अतिशयोक्तिः। अनेन स्वतस्सम्भविना उपमालङ्कारेण राजा क्षणमात्रेणैव समस्तशत्रूणां संहारं विधास्यति इति वस्तुरूपः व्यङ्ग्यार्थः ध्वन्यते। कुपितायाः काल्याः कटाक्षपातः यथा क्षणेन सर्वं नाशयति तथैव कालिकटाक्षसदृशः खड्गः यत्र निपतिष्यति, तदेव क्षणात् नाशयिष्यतीति स्वाभाविकं वस्तु वर्तते। अतः काव्यमिदं स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिः प्रकृष्टमुदाहरणम्।

**घ. स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिः**

अस्मिन् ध्वनौ वाच्यव्यङ्ग्ययोः उभयोः अलङ्काररूपत्वमिति जानन्ति भवन्तः। उदाहरणं यथा–

**गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः।**
**ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम्॥ इति।**

अस्मिन् काव्ये राज्ञः वर्णनमस्ति। अयं राजा युधि क्रोधेन निजाधरं दन्तैः खण्डयन् शत्रूणां वधूनां पल्लवतुल्यमधरं कान्तकर्तृकदशनक्षतात् पीडाविशेषात् मोचितवान् इति काव्यार्थः। यः राजा निजमपि अधरं क्रोधेन खण्डयति, स कथं परेषाम् अधरान् मोचयति? इति विरोधः। अयं विरोधालङ्कारः वाच्यः। अनेन राजा निजाधरदंशनद्वारा शत्रून् विनाशितवान् इति तुल्ययोगितालङ्कारः अभिव्यज्यते। शत्रूणां मरणमत्र व्यङ्ग्यम्। शत्रूणां मरणेन ते तेषां स्त्रीणां विद्रुमतुल्यमधरं चुम्बितुं न समर्थाः। तेन च शत्रुस्त्रीणामधराः चुम्बनाभावात् दशनव्यथातः रक्षिताः। किञ्च मम अधरदशनेन ममैव पीडा अस्तु अन्यस्य शत्रुवधुजनस्य अधरपीडा न भवतु इति नृपवृद्धिः उत्प्रेक्षालङ्काररूपेण तुल्ययोगितेत्प्रेक्षालङ्कारयोः अभिव्यक्तिः।

तस्मात् काव्यमिदं स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिरित्यस्य प्रकृष्टमुदाहरणम्।

### १९.५.२ कविप्रोढोक्तिसिद्धः

अर्थशक्त्युद्‌भवध्वनेः द्वितीयभेदो भवति कविप्रौढोक्तिसिद्धः। कवेः अर्थात् काव्यकर्त्तुः प्रौढोक्तिमात्रात् सिद्धः। प्रौढा उक्तिः प्रौढोक्तिः अर्थात् चमत्कारानुगुणा उक्तिः। लोके अदृष्टः अपि कविप्रतिभामात्रेण कल्पितः अर्थः। यथा कीर्त्याद्यर्थे धावल्यादिवर्णना कविप्रौढोक्तिः भवति। कविप्रौढोक्तिसिद्धः व्यञ्जकः अर्थः वस्त्वलङ्कारादिभिश्चतुर्विधः। अतः तत्र कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः, वस्तुना अलङ्कारध्वनिः। अलङ्कारेण वस्तुध्वनिः, अलङ्कारेण अलङ्कारध्वनिरिति व्यवहारः। आद्यस्योदाहरणं यथा–

**कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः**
**श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्।**
**त्रस्तापाङ्गाः सरसबिसिनीक्रोडसञ्जातशङ्का-**
**दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति॥ इति।**

अस्मिन् पद्ये कस्यचित् कीर्त्तिः वर्ण्यते। अस्य राज्ञः कीर्त्तिः कैलासपर्वतस्य शिखरप्रदेशे अप्सरोभिः वेणुवादनेन गीयते। इयं गीयमाना कीर्त्तिः यदा दिग्गजानां श्रवणयोः समीपे आयाति, तदा ते मृणालशङ्कया शुण्ठान् चालयन्ति। कीर्त्तिः धवला इति कविप्रौढोक्तिः। अतः धवलां कीर्त्तिं धवलं मृणालमिति शङ्कां कुर्वन्ति गजाः। कविप्रतिभाद्वारा कीर्त्तेः श्रवणप्रवेशान्तसरसविशिनीकाण्डसम्भावनया वस्तुना वस्तु ध्वन्यते। अत्र राज्ञः कीर्त्तिं कैलासपर्वते अप्सरसः गायन्ति इति कविप्रौढोक्तिद्वारा वस्तुरूपः अर्थः प्रकाशते। अनेन कविप्रौढोक्तिसिद्धेन वस्तुना जडानामपि गजानां मृणालज्ञानेन श्रवणपुलिने शुण्ढदण्डावर्तनम् इति वस्तु चमत्कारतया व्यज्यते। गजानां यद्यपि अर्थावबोधः न जायते तथापि तेषां मनसि राज्ञः कीर्त्तिः चमत्करोति इति वस्तुरूपः अर्थः ध्वन्यते। अतः मम्मटः वृत्तिवाक्ये एतत्स्पष्टयति–

अत्र वस्तुना येषामप्यर्थावबोधः नास्ति, तेषामप्यैवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्त्तिरिति वस्तु ध्वन्यते।

द्वितीयस्य नाम कविप्रौढोक्तिमात्रसिद्धेन वस्तुना अलङ्कारस्य ध्वनेः उदाहरणं गाथासप्तशतीतः उद्धरति यथा–

**केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता।**
**यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः॥ इति।**

अत्र कस्यचित् राज्ञः वर्णनमस्ति। सः राजा युद्धे बलात्कारेण विजयलक्ष्म्याः विजयलक्ष्म्याः केशाकर्षणपूर्वकं ग्रहणं कृतवान्। तदा तस्य शत्रवः कन्दराभिः कण्ठदेशे गाढं संस्थापिताः पराजिताः शत्रवः भयेन कन्दरासु तिष्ठन्ति इति तात्पर्यम्।

अस्मिन् काव्ये राज्ञः शत्रवः कन्दराभिः कण्ठे स्थापिताः इत्येवं रूपेण कविप्रतिभामात्रसिद्धेन वस्तुरूपः वाच्यार्थः। अनेन वस्तुरूपवाच्यार्थेन राज्ञः विजयलक्ष्म्याः केशग्रहणावलोकनेन कन्दराः (स्त्रीलिङ्गत्वात् कन्दरासु नायिकात्वारोपः) उद्दीपिताः सत्यः शत्रुजनान् कण्ठदेशे आलिङ्गितवत्यः किमु? इति उत्प्रेक्षालङ्कारः ध्वन्यते। लोके नायककर्तृकनायिकायाः केशाकर्षणं दृष्ट्वा अपरस्याः नायिकायाः कामोद्रेकः जायते इति प्रसिद्धिः। अपि च युद्धे राज्ञः विजयं दृष्ट्वा तस्य शत्रवः पलायनपूर्वकं कन्दरासु तिष्ठन्तीति काव्यहेतुरलङ्कारः व्यज्यते। काव्यहेतुः इति कथनेन काव्यलिङ्गमलङ्कारः इत्यर्थः। किञ्च, शत्रवः पलायनं कृत्वा तत्र न तिष्ठन्ति, अपि तु तस्मात् राज्ञः पराभवं सम्भाव्य कन्दराः तान् न त्यजन्ति इति अपह्नुतिः अलङ्कारः अपि ध्वन्यते।

अथ कविप्रौढोक्तिसिद्धेन अलङ्कारेण वस्तुध्वनिमुदाहरति–

**गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।**
**मनस्विन्या मानः पीडनभीत इव हृदयात्॥ इति।**

अत्र मानवतीं प्रति मानभङ्गाय अपरमानवतीवृत्तान्तं बोधयन्त्याः कस्याश्चित् सख्याः उक्तिः वर्णिता। यदा मानिनीं नायिकां गाढालिङ्गननिमित्तं प्रियतमः उद्यतः, तदा तस्याः मनस्विन्याः मानः पीडनभयात् इव शीघ्रं दूरभूतः। नायकस्य आलिङ्गनार्थं चेष्टामात्रेण सा मानं त्यक्तवती इत्यर्थः। एवञ्च तादृश्याः स्वाधीनचित्तायाः अपि मानः यदि तावत् शीघ्रं गतः, तर्हि तवापि गमिष्यति इति किमर्थमात्मानं वञ्चयसि? इति सखीवचनमवगम्यते।

अस्मिन् पद्ये पीडनभीत इव मानः शीघ्रं दूरभूतः किम् इति उत्प्रेक्षालङ्कारः वाच्यः। इयमुत्प्रेक्षा कविप्रौढोक्तिसिद्धा। अनेन वाच्यालङ्कारेण नायिकानायकयोः परस्परमालिङ्गनप्रत्यालिङ्गनसुरतक्रीडादिरूपं वस्तु ध्वन्यते।

एवमेव कविप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिमुदाहरति–

**या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा।**
**दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी।। इति।**

अत्र वाग्देवतारूपा कविवाणी वर्णिता। काव्यरूपा सा सरस्वती सर्वोत्कर्षेण वर्तते, या वाणी कवेः वदनकमले निवसन्ती स्वकीयं वृद्धं स्वामिनम् अर्थात् ब्रह्माणमुपहसन्ती भुवनमण्डलं भिन्नप्रकारेण प्रदर्शयति। भगवान् ब्रह्मा अस्य संसारस्य निर्माता। सः परिदृश्यमानजगतः भिन्नं किञ्चित् रचयितुं समर्थः नास्ति। सोऽपि वृद्धः जातः। किन्तु कवेः मुखमण्डले विराजमाना वाणी नूतनं विलक्षणं जगत्स्रष्टुं समर्था। अत्र स्थविरमिव हसन्ती इति स्थले भुवनमण्डलमन्यदिव इति स्थले च उत्प्रेक्षालङ्कारः कविप्रौढोक्तिसिद्धः वाच्यरूपेण वर्तते। अनेन चमत्कारजनकं नूतनं स्रष्टुं कविवाणी समर्था इति ब्रह्मणः सृष्ट्यपेक्षया कविसृष्टेः आधिक्यप्रकटनात् व्यतिरेकालङ्कारः ध्वन्यते। अत्र वदने अम्बुजत्वारोपः कृतः। फलतः कविमुखपद्मनिवासिनी वाणी पद्मासनस्य ब्रह्मणः आसनानुकरणात् उपहसन्ती वर्तते इति भावः। जडं जलजं नाम पद्ममित्यर्थः। जडासनस्थः ब्रह्मा। सरस्वती तु अजडासनस्था। अर्थात् इयं सरस्वती जडं पद्मं विहाय कविमुखे निवसन्ती चमत्कारिककारणं नवं नवं जगत्सृजति इति अर्थः। अत्र हसनादिकं न लोकसिद्धम्। नापि कविवाणी जगदन्यथा दर्शयति इति उत्प्रेक्षाद्वयस्य कविप्रौढोक्तिमात्रसिद्धत्वम्। यद्यपि उत्प्रेक्षालङ्कारं विना अत्र व्यतिरेकः प्रकाशते, तथापि स्फुटः नास्ति। व्यतिरेकालङ्कारस्य व्यञ्जकते उत्प्रेक्षालङ्कारः अस्ति। अतः कविप्रौढोक्तिसिद्धेन उत्प्रेक्षालङ्कारेण अत्र व्यतिरेकालङ्कारः ध्वन्यते इति कविप्रौढोक्तिसिद्धेन अलङ्कारेण अलङ्कारध्वनेः प्रकृष्टमुदाहरणमिदं भवति। एतेषु पूर्वोक्तेषु चतुर्षु उदाहरणेषु कविप्रौढोक्तिमात्रनिष्पन्नः व्यञ्जकः वर्तते।

### १९.५.३ कविनिबद्धवक्तृप्रौढोक्तिसिद्धः

इदानीं वयं कविनिबद्धवक्तृप्रौढोक्तेः भेदचतुष्टयस्य सोदाहरणं चर्चां कुर्मः। मम्मटः प्रथमं कविनिबद्धवक्तृप्रौढोक्तेः वस्तुना वस्तुध्वनेः स्थलं दर्शयति–

**ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगी-**
**स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम्।**
**त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो**
**जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव।। इति।**

इदं पद्यं राजशेखरकृतकर्पूरमञ्जरीनामकसट्टके वसन्तवर्णनाप्रसङ्गे प्राप्यते। तत्र देव्याः विभ्रमलेखायाः विचक्षणा नाम्नी सखी वसन्तं वर्णयति। ये मलयपवनाः लङ्कागिरिमेखलासु स्खलिताः, तत्र सम्भोगखिन्नसर्पिणीनाम् उत्फुल्लाभिः फणापंक्तिभिः पीताः सन्तः, क्षीणत्वं प्राप्ताः; ते च मलयानिलाः सम्प्रति विरहिणीनिःश्वासैः ईषत्सम्बद्धाः सनतः शीघ्रमेव शिशुत्वं विहाय पूर्णं तारुण्यं लभन्ते। अत्र इदं तात्पर्यं– पूर्वं मलयपवनाः सर्पिणिभिः पीताः। अतः अल्पपरिणामत्वात् शिशुत्वाकाराः आसन्। अधुना तु विरहिणीनां दीर्घश्वासैः प्राप्तैश्वर्याः सन्तः अल्पाकारं विहाय बहुपरिमाणेन वहन्तीति कविः वर्णयत यत् मलयानिलाः तारुण्येन पूर्णाः जाताः इति।

अत्र कविः स्वयं मलयानिलानां विषये न कथयित्वा सखीमुखेन वर्णयति। अतः कविनिबद्धवक्तृपौढोक्तिः इति कथ्यते। मलयानिलाः सर्पिणिभिः पीताः शिशुत्वं प्राप्तवन्तः, पुनः विरहिणीनिःश्वाससम्पर्केण तारुण्यपूर्णाः अभवन् इति वर्णनेन प्रौढोक्तिः जायते। अत्र रसः अलङ्कारः वा नास्तीति। इयं प्रौढोक्तिः वस्तुरूपा। इयं कविनिबद्धवक्तृप्रौढोक्तिः

वाच्यरूपेण वर्तते। अनेन वस्तुना विरहिणीनिःश्वासैः प्राप्तैश्वर्याः वायवः किं किं न कुर्वन्ति इति वस्तुरूपः अर्थः ध्वन्यते।

मम्मटः कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन वस्तुना अलङ्कारध्वनेः स्थलं दर्शयति–

**सखि! विरचय्यमानस्य मम धीरत्वेनाश्वासम्।**
**प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम्॥ इति।**

इदं पद्यं गाथासप्तशतीतः आनीतः। प्रियतमनिकटे मानभङ्गः केन प्रकारेण जातः इति पृष्टा नायिका सखीं प्रति वदति– हे सखि! त्वया प्रदत्तैः उपदेशैः धैर्यपूर्वकं ममाभिमानरक्षणमहं कृतवती। किन्तु प्रियतमस्य दर्शनमात्रेण ममाभिमानः सहसा अपगतः।

अत्र मानः अपगतः इति वस्तुरूपकः अर्थः वाच्यः। सखीं प्रति नायिकावचनात् कविनिबद्धवक्तृप्रौढोक्तिः इयम्। अनेन वस्तुना प्रार्थनां विना मानः अपगतः, नायिका च प्रसन्ना जाता इति कथनेन विभावनालङ्कारः व्यङ्ग्यरूपेण प्रतीयते। किञ्च प्रियदर्शनरूपकं सौभाग्यफलं धैर्येण सोढुं न शक्यते किमु इति उत्प्रेक्षालङ्कारः ध्वन्यते। काव्यप्रकाशस्य सुधासागरटीकाकाराणां मतानुसारं श्लोकेऽस्मिन् विभावनोत्प्रेक्षालङ्कारयोः संसृष्टिः सूच्यते। उद्द्योतकाराणां मतानुसारं तु अत्र सङ्करालङ्कारः।

अधुना काव्यप्रकाशकारः कविनिबद्धवक्तृप्रौढोक्त्यलङ्कारेण वस्तुध्वनिस्थलं दर्शयति। यथा–

**आर्द्रार्द्रकरजरदानक्षतैस्तव लोचनयोर्मम दत्तम्।**
**रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते। इति।**

इदमपि पद्यं गाथासप्तशतीतः स्वीकृतम्। नायकस्य शरीरे सपत्नीकृतं नखदन्तक्षतादिकं दृष्ट्वा क्रोधेन रक्तनयनां नायिकां प्रति यदा नायकः पृच्छति– किमर्थं कुपिते लोचने वहसि? इति, तदा तं प्रति नायिका वदति– हे प्रिये! मम लोचने न आक्रान्ते। अपि तु तव अङ्गे (अन्यनायिकाकृतैः) विद्यमानैः नखानां दन्तानाञ्च क्षतैः मम लोचनयोः कृते रक्तवस्त्रं प्रसादरूपेण दत्तमस्ति।

अस्मिन् पद्ये नायिकायाः उत्तरम् उत्तरालङ्काररूपेण वाच्यम्। अनेन वाच्यालङ्कारेण अन्यनायिकाकृतानां नखदन्तक्षतादीनां त्वं केवलं न गोपायसि, किन्तु तेषां चिह्नानां यथा दर्शनविषयता भवति यतसे। अहं तेषां चिह्नानाम् अनुग्रहपात्रं जाता। अन्यनायिकायाः दयायाः पात्रमहमिति वस्तु ध्वन्यते।

अथ मम्मटः कविनिबद्धवक्तृप्रौढोक्त्यलङ्कारेण अलङ्कारध्वनिं निरूपयति–

**महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती।**
**अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति॥ इति।**

अस्मिन् पद्ये विरहकृशां नायकाय आवेदयन्त्याः सख्याः उक्तिः वर्णिताः। नायिकायाः सखी नायकं प्रति वदति– हे सुभग! सा साध्वी नायिका अनेकासु महिलासु अनुरक्ते तव हृदये स्थानम् अप्राप्य अनुदिनमस्याः कृशमपि शरीरं पुनः कृशतरं करोति। कदाचित् स्थानं प्राप्तुं निजं कृशमपि शरीरं कृशतरं सम्पादयति इत्यर्थः। अत्र नायकः अन्यासु आसक्तः इति विरहिणी नायिका चिन्ताक्रान्ता सती अनुदिनं क्षीणा जायते इति सूच्यते। अत्र तव शरीरे स्थानाभावस्य कारणं महिलासहस्रभरितत्वम्। अतः अत्र हेत्वलङ्कारः वाच्यः। अनेन सा तस्याः शरीरं क्षीणादपि क्षीणतरं सम्पादयति, तथापि तव हृदये स्थानं

नैव लभते इति कारणसत्वेऽपि कार्याभावात् विशेषोक्तिरलङ्कारः ध्वन्यते।

एतेषु चतुर्षु स्थलेषु कविनिबद्धवक्तृप्रौढोक्तिसिद्धः वाच्यार्थः व्यञ्जकत्वेन वर्णितः। तदेव अर्थशक्त्युद्भवध्वनेः द्वादशभेदाः भवन्ति। यथा–

१. स्वतः सम्भविना वस्तुना वस्तुध्वनिः।
२. स्वतः सम्भविना वस्तुना अलङ्कारध्वनिः।
३. स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिः।
४. स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिः।
५. कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः।
६. कविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः।
७. कविप्रौढोक्तिसिद्धेन अलङ्कारेण वस्तुध्वनिः।
८. कविप्रौढोक्तिसिद्धेन अलङ्कारेण अलङ्कारध्वनिः।
९. कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः।
१०. कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः।
११. कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन अलङ्कारेण वस्तुध्वनिः।
१२. कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन अलङ्कारेण अलङ्कारध्वनिः।

---

**मूलग्रन्थः–**

**अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः सम्भवी स्वतः।**
**प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा।।**

**वस्तु वालंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत्।**
**वस्त्वलङ्कारमथ वा तेनायं द्वादशात्मकः।।**

**स्वतः सम्भवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन सम्भाव्यमानः। कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वक्त्रेति वा द्विविधोऽपर इति त्रिविधः। वस्तु वालङ्कारो वासाविति षोढा व्यञ्जकः। तस्य वस्तु वालङ्कारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः। क्रमेणोदाहरणम्–**

**अलसशिरोमणि धुत्ताणां अग्गिमो पुत्ति धणसमिद्धिमओ।**
**इअ भणिएण णअङ्गी पप्फुल्लविलोअणो जाआ।।**

**अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते।**

**धन्यासि या कथयसि प्रियसङ्गमेऽपि**
**विस्रब्धचाटुकशतानि रतान्तरेषु**
**नीवीं प्रति प्रणिहिते तु करे प्रियेण**
**सख्यः शपामि यदि किञ्चिदपि स्मरामि।।**

**अत्र त्वमधन्या, अहं तु धन्येति व्यतिरेकालङ्कारः।**

**दर्पान्धगन्धगजकुम्भकपाटकूटसंक्रान्तिनिघ्नघनशोणितशोणशोचिः।**
**वीरैर्व्यलोकि युधि कोपकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः।।**

अत्रोपमालङ्कारेण सकलरिपुबलक्षयः क्षणात् करिष्यते इति वस्तु।

गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निदर्शन् युधि रुषा निजाधरम्।।

अत्र विरोधालङ्कारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता। मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यते, इत्युत्प्रेक्षा च। एषूदाहरणेषु स्वतः सम्भवी व्यञ्जकः।

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः।
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्।।

त्रस्तापाङ्गाः सरसबिसिनीक्रोडसंजातशङ्का।
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति।।

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्त्तिरिति वस्तु ध्वन्यते।

केसेसु बलामोडिअ तेण अ समरम्मि जअसिरी गहिआ।
जह कन्दराहिं विहुरा तस्स दढं कंठअम्मि संठविआ।।

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्ताद्विधुरान् कण्ठे गृह्णन्ति, इत्युत्प्रेक्षा। एकत्र संग्रामे विजयदर्शनात्तस्याशयः पलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलङ्कारः। न पलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिश्च।

गाढालिङ्गणरहसुज्जुअम्मि दइ लहुं समो सरइ।
माणं सिणीण माणी पीलणभीअव्व हिअ आहिं।।

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भते, इति वस्तु।

जा ठेरं व हसन्ती कइव अणंबुरूहबद्धविणिवेसा।
दावेइ भुअणमण्डलमण्डां विअ जअइ सा वाणी।।

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगत् अजडासनस्था निर्मीयते, इति व्यतिरेकः। एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः।

जे लंकागिरिमेहलासु खलिआ संभोगखिण्णोरई-
फारुत्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम्।

ते एह्णिं मलआनिला विरहिणीणीसा ससंपक्किणो-
जादा झत्ति सिसुत्तणे वि बहला तारुणपुण्णा विअ।।

अत्र निःश्वासैः प्राप्तैश्वर्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते।

सहि विरइऊण माणस्स मज्झ धीरत्तणेण आसासम्।
पिअदंसणविहलंखलखणम्मि सहसत्ति तेण ओसरिअम्।।

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यते, इत्युप्रेक्षा वा।

ओल्लोल्लकरअरअणक्खएहि तुह लोअणेसु मह दिण्णम्।
रक्तं सुअं पआओ कोवेणो पुणो इमे ण अक्कमिआ।।

**अत्र किमिति लोचने कुपिते वहसि, इति उत्तरालङ्कारेण न केवलमार्द्रनखक्षतानि गोपायसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु।**

**महिलासहस्सभरिए तुह हिअ ए सहुअ सा अमाअन्ती।**
**अणुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ।।**

**अत्र हेत्वलङ्कारेण तनोरस्तनूकरणोऽपि तव हृदये न वर्तते इति विशेषोक्तिः। एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः। एवं द्वादशभेदाः।**

---

**बोधप्रश्नः**

१. अर्थशक्त्युद्भवध्वनेः प्रमुखाः त्रयः भेदाः के?

### १९.६ उभयशक्त्युद्भवः

काव्यप्रकाशकारः संलक्ष्यक्रमव्यङ्ग्यध्वनेः शब्दशक्त्युद्भवम् अर्थशक्त्युद्भवं च सविस्तारं प्रतिपाद्य शब्दार्थोभयमूलकः ध्वनिः एकप्रकारको भवति इति कथयति– शब्दार्थोभयभूरेकः इति।

भवन्तः जानन्ति यत् शब्दशक्तिमूलः ध्वनिः वस्त्वलङ्कारभेदेन द्विविधः इति। अर्थशक्तिमूलश्च सप्रपञ्चं द्वादशविधः प्रदर्शितः। तत्र शब्दशक्तिमूले अर्थस्य व्यञ्जकत्वम्। अर्थशक्तिमूले च शब्दस्य व्यञ्जकत्वं वर्तते इति उभयशक्तिमूलत्वं सर्वत्र एव अस्ति इति यद्यपि ज्ञायते, तथापि तयोः गुणप्रधानभावेन व्यवहारः क्रियते। अर्थात् यत्र शब्दस्य परिवर्तनेनापि अर्थप्रतीतौ क्लेशो न भवति, तत्र अर्थशक्तिमूलत्वम्। किन्तु यत्र शब्दस्य परिवर्तनेन अर्थस्यापि परिवर्तनं जायते तत्र शब्दशक्तिमूलम् इति पूर्वमालोचितम्। इदानीं जानन्तु यत् यत्र द्वयोरेव शब्दार्थयोः प्राधान्येन व्यञ्जकत्वं भवति, तत्रैव उभयशक्तिमूलत्वम् इति व्यवहारः। शब्दार्थोभयशक्तिमूलध्वनौ शब्दपरिवृत्तिसहत्वम्, शब्दपरिवृत्यसहत्वञ्च इत्युभयं वर्तते। उदाहरणं यथा–

**अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।**
**तारकातरला श्यामा सानन्दं न करोति कम्।। इति।**

अस्मिन् श्लोके द्विविधः अर्थः प्राप्यते। एकः अर्थः रात्रिपक्षे द्वितीयश्च नायिकार्थे वर्तते। रात्रिपक्षे अर्थः यथा– सा श्यामा (रात्रिः) या खलु मेघाद्यनावृततया स्फुरद्रूपेण चन्द्रेण तारकाभिश्च भूषिता सती समुद्दीपितमन्मथा कं वा सानन्दं न करोति? सर्वान् एव सानन्दं करोति इत्यर्थः।

नायिकापक्षे अर्थः यथा– सा श्यामा (षोडशवार्षिकी नायिका) या खलु आलस्यरहिता, चन्द्राख्यशिरोभूषणद्वारा भूषिता, हर्षेण समुद्दीपितमन्मथा चञ्चलनयना च कं पुरुषं सानन्दं न करोति? इति।

अत्र रात्रिरूपकः नायिकारूपकश्च द्विविधः अर्थः यदा ज्ञायते, तदा स्त्रीविशेष इव रात्रिः इति उपमालङ्कारः प्रतीयते। अस्मिन् श्लोके चन्द्र-तारका-तरल-श्यामा इति शब्दाः शब्दपरिवृत्तिं न सहन्ते। अर्थात् एतेषां शब्दानां परिवर्तनेन अर्थद्वयप्रतीतिः न सम्भवति। तस्मादत्र शब्दशक्तिमूलत्वं वर्तते। अपि च अतन्द्रा-आभरण-समुद्दीपितमन्मथ-अप्रभृतयः शब्दाः परिवृत्तिं सहन्ते। एतेषां परिवर्तनेन अपि अर्थद्वयस्य प्रतीतिः जायते। अतोऽत्र अर्थशक्तिमूलत्वमपि अस्ति। शब्दशक्तिमूलत्वम्, अर्थशक्तिमूलत्वञ्च काव्येऽस्मिन् युगपत् वर्तते इति उभयशक्तिमूलध्वनेः स्थलमिदं भवति। अयम् उभयशक्तिमूलध्वनिः एकविधो भवति।

तदेवं काव्यप्रकाशकारः ध्वनेः अष्टादशभेदान् निरूपयति। यथा अविवक्षितवाच्यस्य अर्थान्तरसंक्रमिवाच्यत्वम्, अत्यन्ततिरस्कृतवाच्यत्वञ्चेति भेदद्वयम्। विवक्षितान्यपरवाच्यस्य असंलक्ष्यक्रमव्यङ्ग्यनाम्ना रसादिध्वनिरिति एकः भेदः। संलक्ष्यक्रमव्यङ्ग्यस्य शब्दशक्तिमूलत्वे प्रभेदे अलङ्कारध्वनिः वस्तुध्वनिरिति च भेदद्वयम्। अर्थशक्तिमूलस्य द्वादशभेदाः, उभयशक्तिमूलस्य च एकः भेदः इति सर्वम् आहत्य ध्वनेः मुख्यतः अष्टादशभेदाः भवन्ति। साहित्यदर्पणकारोऽपि वदति– तदष्टादशधा ध्वनिः इति। (सा.द. 3/1)

---

**मूलग्रन्थः**

**शब्दार्थोभयभूरेकः यथा–**

**अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा।**
**तारकातरला श्यामा सानन्दं न करोति कम्॥**

**अत्रोपमा व्यङ्ग्या।**

**भेदा अष्टादशास्य तत्॥**

**अस्येति ध्वनेः।**

---

**बोधप्रश्नः**

1. शब्दार्थोभयभूरेकः-इत्यस्य किं तात्पर्यम्?

## १९.७ रसादिध्वनिभेद एक एव

काव्यप्रकाशकारः ध्वनिभेदगणनावसरे असंलक्ष्यक्रमव्यङ्ग्यध्वनिः नाम रसादिध्वनिः एकविधः इति प्रतिपादितवान्। इदानीं भवतां मनसि इयं शङ्का स्यात् यत् रसादीनां बहवः भेदाः सन्ति। अतः ध्वनेः अष्टादशभेदाः कथं सम्भवन्ति इति। अर्थात् रसभावादीनां यदि बहुभेदाः भवन्ति तदा असंलक्ष्यक्रमव्यङ्ग्यध्वनिः एकविधः इति कथम् उच्यते? इति।

अस्याः शङ्कायाः समाधानमपि तत्रैव मम्मटेन कृतम्। तेनोक्तं यथा– रसादीनाम् अनन्तत्वाद् भेदः एको हि गण्यते इति। अर्थात् रसभावादीनाम् अनन्तभेदकारणतः एक एव भेदः असंलक्ष्यक्रमव्यङ्ग्यनाम्ना व्यवहृतो भवति। रसादीनाम् असंख्भेदाः कथं भवितुमर्हन्ति इति ग्रन्थकारः सूचयति यत् तत्र रसाः शृङ्गारादिभिः भेदैः नवसंख्याकाः भवन्ति। तत्र शृङ्गाररसस्य द्वौ भेदौ सम्भोगः विप्रलम्भश्चेति। सम्भोगशृङ्गारस्य पुनः नायिकानायकयोः परस्परमवलोकनालिङ्गनपरिचुम्बनादिभिः अनेके भेदाः भवितुमर्हन्ति। विप्रलम्भशृङ्गाररसस्य अभिलाष-विरह-ईर्ष्या-प्रवास-शापभेदैः पञ्चप्रकाराः इति पूर्वं पठितम्। उभयविधस्यापि शृङ्गाररसस्य विभावानुभावव्यभिचारिभावानां वैचित्र्यं वर्तते। तत्रापि वर्णितस्य नायकस्य उत्तम-मध्यमाधमभेदाः भवन्ति। तत्रापि देश-काल-अवस्थादिभेदाः भवन्ति। अतः एकस्य एव रसस्य आनन्त्यं जायते। सर्वेषां रसानां भेदगणने तु संख्या अपरिमिता भवेत्। तस्मात् रसादिध्वनिभेद एक एव इति व्यवहारः भवति।

---

**मूलग्रन्थः**

**ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह–**

**रसादीनामनन्तत्वाद्भेद एको हि गण्यते।**

**अनन्तत्वादिति। तथाहि– नव रसाः। तत्र शृङ्गारस्य द्वौ भेदौ। सम्भोगो**

**विप्रलम्भश्चेति। सम्भोगस्यापि परस्परविलोकनालिङ्गनपरिचुम्बादिकुसुमोच्चय-जलकेलिसूर्यास्तमयचन्द्रोदयषड्ऋतुवर्णनादयो बहवो भेदाः। विप्रलम्भस्याभिलाषादय उक्ताः। तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम्। तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वं तत्रापि देशकालावस्थादिभेदा इत्येकस्यैव रसस्यानन्त्यम्। का गणना त्वन्येषाम्। असंलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते।**

---

**बोधप्रश्नः**

१. रसादीनां बहुभेदत्वेन कथं ध्वनेः अष्टादशभेदाः भवन्ति?

## १९.८ सारांशः

इत्थं भवन्तः काव्यप्रकाशस्य चतुर्थे उल्लासे संलक्ष्यक्रमव्यङ्ग्यध्वनेः अष्टादशभेदान् पठितवन्तः। अनेन ध्वनिभेदगणनाविषये भवतां ज्ञानं जातम्। भवद्भिः ज्ञातं यत् संलक्ष्यक्रमध्वनेः भेदत्रयम्– १. शब्दशक्त्युद्भवः, २. अर्थशक्त्युद्भवः, ३. उभयशक्त्युद्भवश्चेति। शब्दशक्त्युद्भवस्य अलङ्कारध्वनिः, वस्तुध्वनिश्चेति भेदद्वयं पठितम्। अर्थशक्त्युद्भवस्य द्वादशभेदाः आलोचिताः। यद्यपि रसादीनां शृङ्गारादिभिः बहुभेदाः सन्ति, तथापि तेषाम् अनन्तत्वात् एकः भेदः स्वीकृतः। अर्थात् असंलक्ष्यक्रमव्यङ्ग्यध्वनिः एकविधः इति व्यवहारः। तस्मात् ध्वनेः मुख्यतया अष्टादशभेदाः भवन्ति।

## १९.९ शब्दावली

| | | | |
|---|---|---|---|
| १. | अनुस्वानाभः | – | अनुरणनरूपः। प्रध्विन्यादिपदाभिधेयः (अनु अर्थात् पश्चात् स्वनः यस्य सः अनुस्वनः, तस्य भावः अनुस्वानम्, तस्य आभा इव आभा यस्य सः) |
| २. | मा प्रसाङ्क्षित् | – | मा प्रसक्तं भवति इत्यर्थः। |
| ३. | करवालः | – | खड्गः। |
| ४. | तिग्मः | – | तीक्ष्णः। |
| ५. | अलङ्कार्यः | – | अलं-कृ-घञ्, अलङ्कारणस्य योग्यः, मुख्यः इत्यर्थः। |
| ६. | स्वतःसम्भवी | – | स्वतः सम्भवति इति। लोकेऽपि यत् दृश्यते। |
| ७. | कविप्रौढोक्तिः | – | लोके अविद्यमानेऽपि कविना कल्पिता उक्तिः। |
| ८. | कविनिबद्धवक्तृप्रौढोक्तिः | – | कविना कल्पितस्य पात्रस्य या उक्तिः। |
| ९. | त्रस्तापाङ्गाः | – | तिर्यग्भूताः अपाङ्गाः अर्थात् नेत्रप्रान्ताः येषाम्। |
| १०. | कन्दरा | – | गुहा। |
| ११. | अजडासन्था | – | जडं जलजं, तद्रूपमासनं ब्रह्मासनम् इत्यर्थः। न जडासनस्था या सा, अर्थात् सरस्वती। |
| १२. | शब्दार्थोभयभूरेकः | – | शब्दश्च अर्थश्च शब्दार्थौ, तद्रूपं यत् उभयं तद् भूः, तत् शक्त्युद्भव इत्यर्थः। |

## १९.१०सन्दर्भग्रन्थः


१. साहित्यदर्पणम्

२. ध्वन्यालोकः

३. काव्यप्रकाशः

४. संस्कृतकाव्यतत्त्वविचारः


## १९.११ सहायकग्रन्थः


१. काव्यप्रकाशः (झल्लीकरवामनः-भण्डारकर ओरिएण्टल इन्स्टिच्युट्, पुणे, १९५०)

२. काव्यप्रकाशः (मणिव्याख्यासहितः)-डा. सूर्यमणिरथः, पुरी २००४

३. संस्कृतकाव्यतत्त्वविचारः-अध्यापिका केतकीनायक, पुरी, १९९७

४. संस्कृतहिन्दीकोश-वामनशिवराम आप्टे, दिल्ली, २००६

५. भारतीयसाहित्यशास्त्रकोश-डा. राजवंशसहायहीरा, पटना, १९७३


## १९.१२बोधप्रश्नोत्तराणि

१. संलक्ष्यक्रमव्यङ्ग्यध्वनेः प्रमुखभेदाः त्रयः सन्ति। यथा– शब्दशक्त्युद्भवध्वनिः, अर्थशक्त्युद्भवध्वनिः, उभयशक्त्युद्भवध्वनिश्च इति।

२. यत्र काव्ये शब्दस्य परिवर्तनेन अर्थस्य बोधने क्लेशः जायते, अर्थात् शब्दः स्वपरिवर्तनं न सहते, तत्रैव शब्दशक्तिमूलध्वनेः व्यवहारः।

३. मम्मटः शब्दशक्त्युद्भवध्वनेः एकं प्रभेदं वस्तुध्वनिरिति प्रदर्शयति। तत्र व्यङ्ग्यार्थः केवलं वस्तुरूपो भवति। अत्र शङ्का जायते यत् अलङ्कारोऽपि वस्तु इति कथ्यते। अतः वस्त्वलङ्कारयोः भेदः कथम्? इति। अत्र समाधानं वदति– वस्त्वेवेति अनलङ्कारं वस्तुमात्रम् अर्थात् अलङ्कारभिन्नां वस्तु एव। एवञ्च गोवलिवर्दन्यायेन वस्त्वलङ्कारयोः भेदः इति भावः।

४. काव्यप्रकाशे व्यतिरेकालङ्कारध्वनेः उदाहरणे निरुपादानसम्भार इत्यादिपद्यं दत्तमस्ति। यद्यपि तत्र व्यतिरेकालङ्कारः ध्वन्यते तथापि उपमालङ्कारः वर्तते। किन्तु ब्राह्मणश्रमणन्यायेन उपमानदीनाम् अलङ्कारता। अर्थात् उपमालङ्कारः तत्र वाच्यः भवति, न तु मुख्यः।

५. अर्थशक्त्युद्भवध्वनेः प्रमुखाः त्रयः भेदाः। यथा– स्वतः सम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धवक्तृप्रौढोक्तिसिद्धश्चेति। तत्र लोके दृश्यमानं वस्तु स्वतः सम्भवी, लोके अविद्यमानमपि वस्तु कविप्रतिभया कल्पितं चेत् कविप्रौढोक्तिसिद्धं, कविना कल्पितस्य पात्रस्य मुखे वर्णितमपि अलौकिकं वस्तु कविप्रौढोक्तिसिद्धरूपेण ज्ञायते।

६. शब्दार्थोभयभूरेकः इति कथनेन उभयशक्तिमूलध्वनिः एकविधः इति ज्ञायते। तत्र शब्दश्च अर्थश्च शब्दार्थौ, तद्रूपं नाम तदुभयम्। तदभुः अर्थात् तत् शक्त्युद्भवः। अस्मिन् ध्वनौ शब्दशक्तिमूलत्वम्। अर्थशक्ति-मूलत्वञ्च वर्तते।

७. यद्यपि रसादयः बहुविधाः वर्णिताः, तथापि मम्मटः ध्वनिकाव्यस्य प्रमुखान् अष्टादशभेदान् आदौ गणयति। तस्य मते असंलक्ष्यक्रमव्यङ्ग्यध्वनिः रसादीनाम् अनन्तत्वात् एक एव गण्यते। तस्मात् अविवक्षितवाच्यस्य द्वौ भेदौ, विवक्षितान्यपरवाच्यस्य च रसादिध्वनिभेदः एकस्तथा संलक्ष्यक्रमव्यङ्ग्यत्वेन पञ्चदशभेदाः इति आहत्य शुद्धध्वनेः अष्टादशभेदाः भवन्ति।

## १९.१३ अभ्यासप्रश्नाः

१. मम्मटमतानुसारं संलक्ष्यक्रमव्यङ्ग्यध्वनेः त्रैविध्यमुपस्थापयत।

२. शब्दशक्तिमूलध्वनेः भेदद्वयं सोदाहरणं निरूपयत।

३. अर्थशक्त्युद्भवध्वनेः आद्यं प्रभेदं सोदाहरणं लिखत।

४. कविप्रौढोक्तिसिद्धस्य भेदचतुष्टयं सोदाहरणं प्रतिपादयत।

५. कविनिबद्धवक्तृप्रौढोक्तिसिद्धं ध्वनिं सविस्तरं लिखत।

६. उभयशक्त्युद्भवध्वनिं सोदाहरणं प्रतिपादयत।

७. रसादिध्वनिभेदः एक एव इति सयुक्तिकं निरूप्यताम्।

—◆—

## विंशः पाठः ( व्यञ्जकमुखेन ध्वनिभेदः )



### पाठसंरचना



### २०.१ प्रस्तावना

अत्र काव्यप्रकाशस्य विंशे पाठे भवतां स्वागतम्। इतः पूर्वं भवन्तः व्यङ्ग्यमुखेन ध्वनिभेदान् पठितवन्तः। इदानीं व्यञ्जकमुखेन अपि ध्वनिभेदाः सम्भवन्ति इति आलोचयामः। व्यङ्ग्यमुखेन ध्वनेः अष्टादशभेदाः पूर्वस्मिन् पाठे आलोचिताः। तेषामेव पुनः पद-वाक्य-प्रबन्धादिभिः शुद्धव्यञ्जकैः बहुभेदाः सम्भवन्ति। अत्र शङ्का भवति यत्

ध्वनिः काव्यविशेषः इत्युक्तम्। तत् कथं तस्य पदप्रकाशता इति। एतस्मिन् विषये ध्वन्यालोकस्य तृतीये उद्योते समाधानं दत्तम्। ध्वनिव्यवहारे पदानां वाचकत्वेन प्रयोजकत्वं नास्ति। तत्र व्यञ्जकत्वेन एव ध्वनिव्यवहारस्य व्यवस्था। पदात् अभिधाद्वारा ध्वनिबोधः न भवति, अपि तु व्यञ्जनाव्यापारेण एव। अतः ध्वनेः पदव्यञ्जकत्वं सिद्धम्। अथवा ध्वन्यते इति ध्वनिः इतिव्युत्पत्तिद्वारा अतिशचयचमत्कारकारी व्यङ्ग्यार्थः ध्वनिपदार्थः भवति। एतस्य शब्दरूपत्वेन अभावात् प्रकाशकत्वं प्राग्वत् व्यञ्जकरूपत्वं पदानां सम्भवत्येव इति कथने न काऽपि क्षतिः। त्र ध्वनिकारः कथयति– किं च काव्यानां शरीरिणमेव संस्थानविशेषावच्छिन्नसमुदायसाध्याऽपि चारूत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कलप्यत इति पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारो न विरोधी इति।

(ध्वन्यालोकः तृतीयोद्योतः-1-वृत्तिः)

## २०.२ उद्देश्यम्

अस्य पाठस्य अध्ययनेन भवन्तः–

- व्यञ्जकमुखेन ध्वनिभेदान् ज्ञास्यन्ति।
- शुद्धध्वनिभेदसंख्याः गणयितुं समर्थाः भविष्यन्ति।
- शब्दार्थोभयशक्तिमूलध्वनिः वाक्यगतः इति ज्ञानमर्जयिष्यन्ति।
- अर्थान्तरसंक्रमितवाच्यादयः पदगताः वाक्यगताश्च भवन्ति इति ज्ञास्यन्ति।
- अर्थशक्त्युद्भवध्वनिः प्रबन्धप्रकाश्य इति ज्ञातुं सर्मथाः भविष्यन्ति।
- रसादिध्वनेः प्रकृति-प्रत्यय-सम्बन्धपदादीनि व्यञ्जकानि इति निरूपयितुं सक्षमाः भविष्यन्ति।
- सङ्करन्यायेन संसृष्टिन्यायेन च ध्वनेः सङ्कीर्णभेदान् गणयितुं पारयिष्यन्ति।

## २०.३ शुद्धध्वनिभेदसंख्या

इतः पूर्वं भवन्तः शुद्धध्वनेः अष्टादशभेदान् पठितवन्तः। एषु पुनः केचन वाक्यगताः केचन च पदगताः भवन्ति इति इदानीम् आलोचयामः।

### २०.३.१ वाक्यप्रकाश्यः

भवन्तः जानन्ति यत् ध्वनेः अष्टादशभेदेषु शब्दार्थोभयशक्तिमूलध्वनिः सम्भवति इत्यर्थः। काव्यप्रकाशकारः वाक्ये द्व्युत्थः इति सूत्रेण शब्दार्थोभयशक्तिमूलः ध्वनिः वाक्यगतः इति सूचयति। द्वाभ्यामुत्तिष्ठति इति द्व्युत्थः, अर्थात् शब्दार्थोभयशक्तिमूलः ध्वनिः वाक्ये एव भवति इति। वाक्ये प्रकाशयितुं शक्यः शब्दः वाक्यप्रकाशः इति कथ्यते।

### २०.३.२ पदप्रकाश्यः

पदे प्रकाशयितुं योग्यः पदप्रकाश्यः। उभयशक्तिमूलध्वनिं विहाय अर्थान्तरसंक्रमितवाच्यादयः अन्ये सप्तदशभेदाः पदगताः भवन्ति। एते पुनः वाक्यगताः अपि सम्भवन्ति। फलतः पदगतवाक्यगतायां ध्वनेः ३४ भेदाः उभयशक्तिमूलं च योजयित्वा ध्वनेः पञ्चत्रिंशत् भेदाः (३५) जायन्ते। एतेषामुदाहरणान्यपि काव्यप्रकाशे प्रदत्तानि।

अर्थान्तरसंक्रमितवाच्यध्वनेः पदप्रकाशता यथा यस्य मित्राणि मित्राणि...।। इत्यादिपद्यम् उदाहृतम्। अस्मिन् पद्ये अविवक्षितवाच्यध्वनेः भेदद्वयात् अर्थान्तरसंक्रमितवाच्यत्वं वर्त्तते। यस्य पुरुषविशेषस्य मित्राणि मित्राणि भवन्ति, शत्रवः शत्रवश्च भवन्ति तथा अनुकम्पस्य अनुकम्प्यश्च सन्ति; तस्य जन्म सार्थकं भवति। स एव संसारे सुखेन जीवति इति काव्यार्थः। अत्र प्रथमं मित्राणि इति पदस्य सखायः इत्यर्थः। शत्रवः इति द्वेषिणः, द्वितीयस्य शत्रवः इत्यस्य नियन्त्रणाधीनाः इत्यर्थः। अनुकम्प्य इति अनुकम्पयितुं योग्यः अर्थात् दयाविषयः। अनुकम्प्य इति द्वितीयस्य स्नेहपात्रम् एव इत्यर्थः। एवं रूपेण अत्र द्वितीयमित्रादिशब्दाः अर्थान्तरसंक्रमितवाच्याः।

विवक्षितवाच्यस्य अत्यन्ततिरस्कृतवाच्यत्वे प्रभेदे काव्यप्रकाशकारः एकं पद्यम् उदाहरति। तस्य संस्कृतच्छाया यथा–

**खलव्यवहारा दृश्यन्ते दारूणा यद्यपि तथापि तथापि धीराणाम्।**

**हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति।। इति।**

यद्यपि साधुजनान् प्रति दुर्जनाः दुर्व्यवहारं कुर्वन्ति, तथापि ते साधवः दुर्जनान् प्रति निजव्यवहारं न परिवर्तयन्ति। कारणं साधवः स्वभावेन मित्रहृदयाः भवन्ति। अत्र विमुह्यन्ति इति पदे अत्यन्ततिरस्कृतवाच्यध्वनिः। व्यवहारः अचेतनः। अतः मोहपदम् अत्यन्ततिरस्कृतम् सत् धीराणां व्यवहाराः न प्रतिवध्यन्ते इति अर्थं बोधयति।

असंलक्षक्रमव्यङ्ग्यस्य उदाहरणे लावण्यं तदसौ कान्तिः ... इत्यादि- पद्यमुदाहृतम्। अत्र कस्यचित् विरहीजनस्य परामर्शः वर्णितः। नायिकायाः तत् लावण्यं, सा कान्तिः, तत् रूपम्, स च कथोपकथनक्रमः इति एतत् सर्वं तदा तस्याः निकटे अवस्थानसमये अमृततुल्यम् आसीत्। अधुना तस्याः वियोगेन स्मृतिदशायां महान् ज्वरः इव पीडाजनकः अस्ति इति काव्यार्थः। अत्र तदा इति पदेन अनुभववेद्यः अर्थः बोध्यते। अधुना पदात् नायिकायाः विरहकालः, ज्वरः इति पदात् दुःखातिशयश्च अभिव्यक्तः भवति।

काव्यप्रकाशकारः असंलक्षक्रमव्यङ्ग्यस्य पदप्रकाशतायाः अपरम् उदाहरणम् मुग्धे मुग्धतयैव नेतुमखिलः ... इत्यादि पद्येन उपस्थापयति। अमरुशतकस्य पद्येऽस्मिन् प्रियतमनिकटे अभिमानादिककर्त्तुम् उपदिशन्तीं सखीं प्रति नायिकायाः प्रत्युक्तिः वर्णिता। सखी वदति हे! मुग्धे मूढरूपेण सर्वं समयं यापयितुं त्वया किमर्थम् आरभते। प्रियतमस्य निकटे मानं कुरु, धैर्यं धारय, सरलता दूरे कुरु इत्यादि। तदा नायिका भीतानना सती प्रत्युत्तरेण वदति हे सखि! एतत् सर्वं शनैः वद। यतः त्वं यस्य प्रियतमस्य विषये एवम् आचरितुम् उपदिशसि, सः मम हृदि स्थितः प्राणेश्वरः श्रोष्यति इति। अत्र भीतानना पदेन नायिकायाः भयस्य अकृत्रिमता प्रकाश्यते। अकृतिमानुरागयुक्तः सम्भोगशृङ्गाररसः भीतानना पदेन परिपुष्टः भवति इति।

भावादीनां पदप्रकाशत्वे तादृशं किञ्चित् वैचित्र्यम् अधिकतया न वर्त्तते इति काव्यप्रकाशकारेण तदुदाहरणं नैव दत्तम्।

ध्वनेः प्रभेदेषु शब्दशक्तिमूले वस्तुना अलङ्कारध्वनेः पदप्रकाशत्वं रुधि रविसरप्रसाधितकर ... इत्यादिना पद्येन दर्शयति। अत्र कस्यचित् चाटुकारस्य राजानं प्रति उक्तिः वर्णिता। हे राजन्! भवान् शत्रूणां कृते भयङ्करः तथा मित्राणां कृते मनोहरः दृश्यते। यदा शीघ्रं भवान् क्रोधेन भृभङ्गं करोति, तदा भवतः ललाटं कपोतपालिकावत् शोभते। अत्र भीमः इति भीषणीयार्थेन नृपसम्बोधनविशेषणद्वारा राज्ञः उपमानरूपेण मध्यमपाण्डवः भीमसेनः प्रतीयते। फलतः भीम इव भवान् भयङ्करः इति अर्थप्रतीता उपमालङ्कारः व्यङ्ग्यः भवति। भीमपदस्य परिवृत्त्यसहत्वेन शब्दशक्तिमूलकत्वं ज्ञातव्यम्।

शब्दशक्तिमूले वस्तुना वस्तुध्वनिम् उदाहरति, भुक्तिमुक्तिकृदेकान्त इत्यादिना पद्येन। अस्मिन् काव्ये अनेकजनानां सविधे समुपस्थितम् उपनायकं विलोक्य अप्रस्तुतवेदप्रशंसाव्याजेन हर्षं व्यञ्जयन्ती नायिका वदति। भुक्तिमुक्तिप्रदानकारी आगमः अर्थात् आगमनं कस्य वा रमणीजनस्य आनन्दं न व्यङ्ग्यार्थः। मुक्तिः नाम अपवर्गः इति वाच्यार्थः। स्मरसन्तापत्यागश्च व्यङ्ग्यार्थः। एकान्तः परमात्मस्वरूपम् इति वाच्यार्थः, विविक्तस्थानम् इति च व्यङ्ग्यार्थः। समादेशः अर्थात् नियोगः इति वाच्यार्थः आह्वानं च इति व्यङ्ग्यार्थः। अत्र भुक्तिमुक्तिकृत्– सदागमप्रभृतिपदैः व्यङ्ग्यार्थः प्रतीयते। काचित् नायिका संकेतदायिनम् उपपतिं व्यञ्जनावृत्त्या प्रशंसति इत्यर्थः।

अर्थशक्तिमूलध्वनेः द्वादशभेदे स्वतः सम्भविना वस्तुना वस्तुध्वनेः पदव्यञ्जकत्वं सायं स्नानमुपासितं ... इत्यादिना पद्येन दर्शयति। अत्र उपपतिं संभुज्य गृहं प्रति प्रत्यागच्छन्तीं नायिकां ज्ञातरहस्या सखी वदति हे सखी! तव सौकुमार्यं जगति विलक्षणम् अस्ति। यतः अधुना सन्ध्यासमये स्नानं कृत्वाऽपि तव शरीरे चन्दनलेपनं कृतवती। सूर्ये अस्तं गतेऽपि अर्थात् सूर्यकिरणस्य तापवाधाभावेऽपि त्वं क्लान्ता असि। तव नेत्रयुगलं मुद्रितप्रायं दृश्यते इति। अत्र नायिकायाः क्लान्तेः कारणं विनापि क्लान्ता असि इति वस्तुरूपकः अर्थः। अनेन परपुरुषेण सह सम्पर्कं संस्थाप्य क्लान्ता असि इति अधुना पदेन वस्तुरूपकः अर्थः व्यङ्ग्यः भवति।

स्वतः संभविना वस्तुना अलङ्कारध्वनिस्थलं दर्शयितुं काव्यप्रकाशकारः तदप्राप्तिमहादुःखविलीनाशेषपातका ... इत्यादिपद्यम् उदाहरति। विष्णुपुराणगतं पदद्वयमेतत् (५-१३-२१, २२)। भगवन्तं श्रीकृष्णं न प्राप्य अनूभूतने महादुःखेन सञ्चितमपि पापं नश्यति, तस्य श्रीकृष्णस्य चिन्तनेन च सुखप्राप्तिरिति अतिशयोक्त्यलङ्कारः ध्वन्यते। अत्र अशेषचयपदयोः प्राधान्यात् पदप्रकाशता।

अर्थशक्त्युद्भवस्य स्वतः संभविना अलङ्कारेण वस्तुध्वनेः उदाहरणस्थलं यथा– क्षणदासावक्षणदा वनमवनं ... इत्यादिपद्यम्। अत्र चाटुकारः राजानं वदति हे वीर! त्वयि विपरिते सति तव शत्रूणां कृते सर्वमपि विपरितं भवति। क्षणदा रात्रिः अक्षणदा भवति अर्थात् अरण्यम् अवनम् अर्थात् रक्षकः भवति। व्यसनम् अर्थात् विपत्तिः। अव्यसनं नाम अवीनां मेषाणाम् असनं प्रेरणं कालक्षेपकं भवति इत्यर्थः। अत्र क्षणदा अक्षणदा, वनम् अवनम् इत्यादि स्थले विरोधालङ्कारः वाच्यः। अनेन विधिरपि त्वाम् अनुवर्त्तते इति सर्वपदेन प्रतीयते। अत्रैव स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनेः उदाहरणार्थं प्राकृतपद्यमेकम् उदाहृतम्। तस्य संस्कृतच्छाया यथा–

**तव वल्लभस्य प्रभाते, आसीदधरो म्लानकमलदलम्।**
**इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम्।।** इति।

गाथासप्तशतीतः पद्यमिदं स्वीकृतमस्ति। अत्र सखी नववधूं प्रति वदति यत् हे सखि! अद्य प्रभाते तव प्रियतमस्य अधरोष्ठः मलिनं कमलदलमिव आसीत्। एतत् श्रुत्वा नवोढा नायिका अधोमुखी अभवत्। अत्र अधरोष्ठः म्लानकमलदलमिति रूपकालङ्कारः। तेन नायिकाया प्रियतमस्य अधरस्य तथा मुहुर्मुहुः चुम्बनं कृतं येन म्लानत्वम् इति काव्यलिङ्गालङ्कारः मिलाणकमलदलपदप्राधान्येन न द्योत्यते।

तत्रैव कविप्रौढोक्तिमात्र निष्पन्न शरीरे वस्तुना वस्तुध्वनेः उदाहरणार्थं राईसु चन्दधवलासु ... इत्यादिना प्राकृतपद्यं दत्तम्।

**रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम्।**
**एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः।।** इति संस्कृतम्।

अत्र मानिनीं प्रति सम्प्रति माननिर्वाहः कठिनः इति सखी बोधयति। हे सखी! पूर्णिमायां रात्रौ चन्द्रेण सर्वत्र स्वच्छकिरणाः विस्तारिताः। कामः पुष्पधनुः आस्फाल्य एकच्छत्रः राजा इव भुवने स्वकीयम् आधिपत्यं विस्तारयति। अतः सम्प्रति अभिमानधारणं कष्टकरम् इति संयुक्तिः वस्तुरूपा। अनेन वस्तुना कामदेवस्य राज्ञः आदेशं प्रति कामीकामिनीनां परांमुखता न दृश्यते। तस्मात् उपभोगासक्तेः कामिभिः सानन्दं स्वप्रियाभिः सह रात्रिः अतिवाह्यते इति वस्तु भुवनराज्यपदेन द्योतते।

अर्थशक्तिमूलकविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिस्थलं यथा निशित-शरधियाऽर्पयत्यनङ्गो ... इत्यादि पद्यम्। अत्र कामदेवः सर्वेषां कामिजनानां हन्ता इत्यतः नायिकायाः यौवनारम्भे दृष्टौ सर्वं सामर्थ्यम् अर्पयति। अभिनवतारुण्ये सा कन्दर्पेण अर्पितवला कामिनि यत्र कटाक्षपातं करोति, तत्र कामिजनाः हसित-रूदित-प्रलपित-मूर्च्छादिभावयुक्ताः भवन्ति। अत्र नायिकायाः कटाक्षे कामस्य शरत्वादिवर्णनं वस्तुरूपं भवति। इदं वस्तु कविप्रौढोक्तिसिद्धम्। हसितरूदितादि परस्परं विरुद्धावस्थाः युगपत् एकस्मिन् प्रभवन्ति इति व्यतिकरपदात् व्यञ्जनात् विरोधालङ्कारः व्यङ्ग्यः।

कवेप्रौढोक्तिमात्रसिद्धेन अलङ्कारेण वस्तुध्वनिमुदाहरति वारिज्जंतो वि पुणो ... इति गाथासप्तशतीपद्येन।

**स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः।**
**तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसंगरे जयति।। इति संस्कृतम्।**

सुन्दरः श्यामलाङ्गाः, मनोहरः सुसज्जितकेशपाशरूपः कन्दर्पः नायिकायाः स्कन्धप्रदेशात् बलं गृहीत्वा सुरतरूपे संग्रामे सर्वोत्कर्षेण वर्त्तते। यथा शुद्धात् निवर्तमानमपि कञ्चित् कश्चित् मित्रभूतः अन्यतः स्कन्धावारात् (सैनिकसमूहा) बलं लब्ध्वा तं प्रोत्साहयति तथा अस्याः नायिकायाः पूर्वसुरतवेलायां मुहुर्मुहुः कर्षणेन स्कन्धपतितकेशपाशः साक्षात् स्मर एव स्कन्धात् बलं लब्ध्वा सुरतभोगनिवृत्तमपि मां मनः प्रोत्साहनेन सुरते प्रवर्त्तयति। इति भावः। अत्र सुरतः युद्धक्षेत्रमिति धम्मिल्लः कन्दर्पः इति च वर्णनात् रूपकालङ्कारः वाच्यः। अभिलाषनिवृत्तौ अभिलाषोत्पन्नस्य कारणं नास्ति। तदापि स्कन्धपदेन अभिलाषोदय-कथनात् विभावनालङ्कारः व्यङ्ग्यः।

अर्थशक्तिमूलकविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन वस्तुना वस्तुध्वनिः यथा–

**नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम्।**
**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य।। इति।**

अत्र खण्डितायाः नायिकायाः स्वामिनं प्रति उक्तिः वर्णिता। हे सुभग! त्वं नवपूर्णिमाचन्द्रस्य सखा अथवा भ्राता असि? तत् मम कृते सत्यं वद। चन्द्रस्य यथा प्रदोषरजनी प्रिया तथैव का नायिका तव अनुरागादिसौबाग्यपूर्णा? इति। अत्र नायकं प्रति नायिकायाः प्रश्नः वस्तुरूपः। अनेन मयि त्वं यथा प्रथमतया अनुरक्तः आसीः, परन्तु इदानीं न भवसि तथैव तस्यां नायिकानां तव अनुरागः जातः इति व्यङ्ग्यं नव प्रदोषरजनी पदाभ्यां द्योतते।

तत्रैव कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन वस्तुनालङ्कारध्वनेः स्थलं यथा–

**सखि तव निधुवनसमरेङ्कपाली संख्या निबिडया।**
**हारो निवारितः एवोच्छ्रियमाणस्ततः कथं रमितम्।। इति।**

अत्र नवोढां नायिकां प्रति अत्यन्तविश्वस्तायाः रसज्ञायाः सख्याः उक्तिः वर्णिता। हे सखि! नूतने सुरते युद्धे तव अङ्कपालिः सखी गाढालिङ्गने बाधाजनकं हारं

दूरमकरोत्। तस्मात् प्रियतमेन सह तव कथं रमितं न स्यात्? अर्थात् अत्र कथं पदेन हारच्छेदनात् विलक्षणरतिः अवश्यं भवेत् इति व्यतिरेकालङ्कारः व्यङ्ग्यः।

कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन अलङ्कारेण वस्तुध्वनि यथा–

**प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।**
**स्कन्धे गृहीत्वा घटं हाहा नष्ट रोदिषि सखि! किम्। इति।।**

अत्र जलानयनव्याजेन संकेतस्थानं काचित् नायिका गतवती। तत्र प्रतीक्षणमपि नायकः नागतः। अतः जलघटं स्कन्धे गृहीत्वा यदा गृहद्वारपर्यन्तं समागता तदा पश्चात् संकेतस्थानं प्रति गच्छन्तं नायकं दृष्टवती। अतः पुनः जलानयनव्याजेन संकेतस्थानं गन्तुं विवलितवदनं कृत्वा द्वारस्खलनव्याजेन घटं क्षिप्त्वा लोकवञ्चनायै रोदनं कृतवती। तदा चतुरा सखी वदति हे सखी! गृहद्वारं प्रवशन्ती त्वं स्कन्दे घटं गृहीत्वा परावर्तितवदना सती निष्क्रान्तमपि मार्गं विलोक्य हा हा घटो नष्टः इति किमर्थं क्रन्दसि? इति। अत्र रोदने नष्टत्वं हेतुः घटध्वंसे च विवृत्य पथः विलोकनं हेतुः इति काव्यलिङ्गालङ्कारः वाच्यः। अनेन संकेतस्थलं प्रति गच्छन्तं नायकं दृष्ट्वा यदि त्वं तत्र गन्तुमिच्छसि तर्हि अपरं घटं गृहीत्वा गच्छ इति वस्तु किमिति पदेन व्यज्यते।

काव्यप्रकाशकारः पूर्वेस्मिन् उदाहरणे हत्वलङ्कारस्ये स्वतः सम्भवीत्वम् अस्ति न तु प्रौढोक्तिमात्रसिद्धत्वम् इति वाच्यार्थः अपरं शुद्धम् उदाहरणं प्रस्तौति। यथा वा–

**वि शृङ्खलां त्वां सखि! दृष्ट्वा कृतेन तरलतरदृष्टिम्।**
**द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा विभिन्नः।। इति।**

अत्रापि पुनः संकेतस्थानं प्रति गन्तुं समुत्सुकां नायिकां प्रति सख्युक्तिः वर्णिता। हे सखि!। जलघटस्य अतिभारवशात् त्वं विकला तथा चञ्चलदृष्टियुक्ता जाता। तदा अयं घटः तव कृते कष्टदायकः इति स्वात्मानं विचिन्त्य दुःखेन स्वयं द्वारस्पर्शस्य व्याजेन स्फोटितः।

अत्र घटभङ्गस्य प्रकृतं कारणं गोपयित्वा अप्रकृतस्थापनेन अपह्नुत्यलङ्कारः वाच्यः। अनेन त्वम् आश्वस्ता भव। तवाभिलाषासिध्यर्थं पुनः यथा स्थानं गच्छ। तव श्वश्रू निकटे अहं सर्वं समर्पयिष्यामि इति वस्तु द्वारस्पर्शनव्याज्येन अपह्नुत्याः व्यज्यते।

कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन अलङ्कारेण अलङ्कारध्वनिस्थलं यथा–

**ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा।**
**वृद्धापि नवोढेव परवधूरहह हरति तव हृदयम्।। इति।**

अत्र वृद्धां परवधूं प्रति आसक्तं नायकम् अपहसन्त्याः तरुण्याः उक्तिः वर्णिता। सा वृद्धाऽपि नायिका चन्द्रिकया वसन्तरसेन मद्यस्य आस्वादने च कामोपभोगाय उत्सुकमनाः प्रौढाः अपि नवोढा इव तव हृदयं हरति इति अहो आश्चर्यम्। अत्र परवधूत्वे हृदयहरणे हेतुरिति काव्यलिङ्गालङ्कारः। अनेन तरुणीं विहाय वृद्धायाम् आसक्तस्य नायकस्य चरितं वक्तुम् अशक्यः इति आक्षेपालङ्कारः व्यज्यते। अत्र परवधूपदप्राधान्यात् पदप्रकाश्यता।

एषु चतुर्षु उदाहरणेषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः।

एकस्य पदस्य परिवृत्यसहत्वं परिवृत्तिसहत्वञ्च वक्तुं न शक्यते। अतः शब्दार्थोभयशक्त्युद्‌भवध्वनिः पदप्रकाशयो न भवति। तस्मात् ध्वनेः पञ्चत्रिशंत् भेदाः भवन्ति। यथा– अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्य-अलक्षक्रमाः त्रयः, लक्षक्रमेषु वस्त्वलङ्कारभेदेन शब्दशक्तिमूलकत्वेन द्वैविध्ये चतुस्त्रिंशत्, उभयशक्तिमूलः एकः इति

आहत्य पञ्चत्रिंशत् भेदाः भवन्ति। यथा– अर्थान्तरसङ्क्रमितवाच्य-अत्यन्ततिरस्कृतवाच्य-अलक्षक्रमाः त्रयः, लक्षक्रमेषु वस्त्वलङ्कारभेदेन शब्दशक्तिमूलो द्विविधः, एषां सप्तदशानां वाक्यपदमूलकत्वेन द्वैविध्ये चतुस्त्रिंशत्, उभयशक्तिमूलः एकः इति आहत्य पञ्चत्रिशत्भेदाः ज्ञातव्याः।

---

मूलग्रन्थः

वाक्ये द्व्युत्थः। (सूत्र-५८)

द्व्युत्थः इति शब्दार्थोभयशक्तिमूलः॥

पदेऽप्यन्ये (सूत्र-५९)

अपिशब्दाद्वाक्येऽपि। एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्यापि भारती भासते। तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि।

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति॥

अत्र द्वितीयमित्रादिशब्दाः आश्वस्तत्व-नियन्त्रणीयत्व-स्नेहपात्रत्वादि-संक्रमितवाच्याः।

खलव्यवहारा दीसन्ति दारुणा जहवि तहवि धीराणाम्।
हिअअवअस्वहुमआ णहु ववसाआ विमुज्झन्ति॥

अत्र विमुह्यन्तीति।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचः क्रमः।
तदा सुधास्पदमभूदधुना तु ज्वरो महान्॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते। यथा वा–

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति॥

अत्र भीताननेति एतेन हि नीचैः शंसनविधानस्य युक्तता गम्यते। भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते।

रुधिरविसरप्रसाधितकरवालकरालरुचिरभूजपरिधः।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप भीमः॥

अत्र भीषणीयस्य भीमसेन उपमानम्।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः॥

काचित् सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति।

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः।
आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम्॥



---

अत्र वस्तुना कृतपुरुषपरिचया क्लान्तासीति वस्तु, अधुनापदद्योत्यं व्यज्यते।

तदप्राप्तिमहादुःखविलीनाशेषपातका
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा।
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका।।

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःख-चिन्तनाह्लादाभ्यामनुभूतानीत्युक्तम्। एवं चाशेषचयपदद्योत्ये, अतिशयोक्ती।

क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम्।
बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्।

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्त्तते इति सर्वपदद्योत्यं वस्तु।

तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो।
इअ णववहुआ सोऊण कुणइ वअणं महिसँमुहम्।।

अत्र रूपकेण त्वयास्य मुहुर्मुहुः परिचुम्बनं तथा कृतं येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम्। एषु स्वतः संभवी व्यञ्जकः।

राईसु चंदधवलासु ललिअमप्फालिऊण जो चावम्।
एकच्छत्तं विअ कुमइ भुअणरज्जं विजंभंतो।।

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशातिवाह्यते, इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते। निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले।

दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः।

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः।

वारिज्जंतो वि पुणो संदावकदत्थिएणा हिअएण।
थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो।।

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते, इति ण चलइपदद्योत्यं वस्तु।

सो मुद्धसामलंगो धम्मिल्लो कलिअललिअणिअदेहो।
तीए खंधाहि वलं गहिअ सरो सुरअसंगरे जअइ।।

अत्र रूपकेण मुहुर्महुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः, यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति खंधपदद्योत्या विभावना। एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः।

णवपुण्णिमामिअङ्कस्स सुहअ कोत्तंसि भणसु मह सच्चम्।
का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज।।

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णवेत्यादिपओसेत्यादिपदद्योत्यं वस्तु व्यज्यते।

सहि णवणिहुवणसमरम्मि अङ्कवाली सहिए णिविडाए।
हारो णिवारिओ विअ उच्छेरन्तो तदो कहं रमिअम्॥

अत्र वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत् तत्कथय कीदृगीति व्यतिरेकः कहंपदगम्यः।

पविसंती घरवारं विवलिअवअणा विलोइऊण पहम्।
खंधे धेत्तूण घडं हा हा णट्ठोत्ति रुअसि सहि किंति॥

अत्र हेत्वलङ्कारेण संकेतननिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदा, अपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदद्योतम्। यथा वा–

विहलं खलं तुमं सहि दट्ठूण कुठेण तरलतरदिट्ठिम्।
वारप्फंसमिसेण अ अप्पा गुरुओत्ति पाडिअ विहिण्णो॥

अत्र नदीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वं व्याकुलतया त्वया घटः स्फोटितः इति मया चिन्तितम्, तत्किमिति नाश्वसिषि, तत्समीहितसिद्धये व्रज, अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्ये, इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु।

जोह्नाइ महुरसेण अ विइण्ण तारुण्ण उत्सुअमणा सा।
बुड्ढा वि णवोणव्विअ परवहुआ अहह हरइ तुह हिअअम्।

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवहूपदप्रकाश्यः।

एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः। वाक्यप्रकाश्ये तु पूर्वमुदाहृतम् शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न भवतीति पञ्चत्रिंशद्भेदाः।

---

**बोधप्रश्नः**

१. ध्वनेः पञ्चत्रिंशत् भेदाः के?

### २०.४ प्रबन्धप्रकाश्यः अर्थशक्त्युद्भवः

इतः पूर्वं भवन्तः अर्थशक्त्युद्भवमूलध्वनेः द्वादशभेदान् पठितवन्तः। अयं ध्वनिः न केवलं पदवाक्ययोरेव, अपितु प्रबन्धे भवति। अतः मम्मटः काव्यप्रकाशे पञ्चत्रिंशत् ध्वनिभेदान् प्रदर्श्य सूत्रमाह–प्रबन्धेऽप्यर्थशक्तिभूः इति।

प्रबन्धः इति कथनेन संघटितनानावाक्यसमुदायः बुध्यते। स च ग्रन्थरूपः। प्रबन्धस्य महाकाव्य-खण्डवाक्य-कथा-आख्यायिकादयः अनेके भेदाः भवन्ति। अयं प्रबन्धः अर्थशक्त्युद्भवध्वनेः व्यञ्जकः अस्ति। फलतः द्वादशविधः अर्थशक्त्युद्भवध्वनिः पद-वाक्य-प्रबन्धभेदैः उदाहरति गृध्रगोमायुसंवादादौ। महाभारते शान्तिपर्वान्तर्गत आपद्धर्मपर्वणि त्रिपञ्चाशदधिकशततमे (१५३) अध्याये मृतं बालं संध्यासमये श्मशानसमानीतं दृष्ट्वा गृध्रस्य वचनं यथा– हे जना! गृध्रः शृगालैः च परिव्याप्ते अस्थिकङ्कालपरिपूर्णे सर्वेषां प्राणीनां भयङ्करे स्थाने अस्मिन् संसारे मृतः कश्चित् नैव जीवति। सः प्रियः अथवा शत्रुः भवतु नाम मृतस्य पुनरुज्जीवनं नैव सम्भवति। प्राणिनां मरणानन्तरं गतिः इदृशी एव। गृध्रः रात्रौ अन्धत्वात् दिवसे एव मृतमांसभक्षणसमर्थः। यदि दिवसे मृतं बालकं विहाय बन्धुजनाः गच्छेयुः तर्हि सः मांसभक्षणार्थं समर्थो भविष्यति तदभिप्रायः प्रतीयते। अत्र

स्वतः सम्भविता वाच्यार्थरूपेण वस्तुना पुरुषविसर्जनरूपं वस्तु व्यज्यते। तदा गृध्रवचनं श्रुत्वा रात्रौ मांसभक्षणसमर्थस्य गोमायोः पुरुषविसर्जनपरं वचनं यथा– हे मूढाः! इदानीमपि आकाशे सूर्यः अस्तः। अधुना रात्रिचरेभ्यः भयं नास्ति इत्यर्थः। साम्प्रतं मृत बाले यूयं स्नेहं कुरुथ। अयं सन्ध्यात्मकः मुहूर्त्तः बहुविघ्नकरः। एतन्महुर्त्तापिगते कदाचित् बालः जीवेत्। सुवर्णवत् सुन्दरम् अप्राप्तयौवनं च बालकं गृध्रवाक्येन कथं त्यक्त्वा युस्माभिः गम्यते? अत्रापि स्वतः सम्भविना वाच्यार्थरूपेण वस्तुना जनव्यावर्त्तनरूपं वस्तु व्यज्यते। अत्र न पदं न वा वाक्यम् अपितु पद्यद्वयात्मकः गृध्रगोमायुवचनरूपः प्रबन्धः व्यञ्जकः इति।

अर्थशक्त्युद्भवध्वनेः द्वादशभेदानां मध्ये एक एव अत्र उदाहृतः। अन्ये तु एकादशभेदाः ग्रन्थविस्तरभयात् न उदाहृताः। पाठकाः स्वयमेव लक्षणानुसारम् अनुध्यानं कुर्युः।

अर्थशक्त्युद्भवध्वनेः पदवाक्ययोः व्यञ्जकत्वं पूर्वम् उदाहृतम्। अतः वृत्तौ मम्मटः उल्लिखति अपिशब्दात्पदवाक्ययोः इति।

---

**मूलग्रन्थः**

**प्रबन्धेऽप्यर्थशक्तिभूः॥ (सूत्र-६०)**

**यथा गृध्रगोमायुसंवादादौ।**
**अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले।**
**कङ्कालबहले घोरे सर्वप्राणिभयङ्करे॥**

**न चेह जीवितः कश्चित् कालधर्ममुपागतः।**
**प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी॥**
**इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं॥**

**वचनम्।**

**आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम्।**
**बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन॥**

**अमुं कनकवर्णाभं बालमप्राप्तयौवनं।**
**गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः॥**

**इति निशि विजृम्भमाणस्य गोमायर्जनव्यावर्तननिष्ठं च वचनमिति प्रबन्ध एव प्रथते। अन्ये त्वेकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः स्वयं तु लक्षणतोऽनुसर्त्तव्याः। अपिशब्दात्पदवाक्ययोः।**

---

**बोधप्रश्नः**

१. अर्थशक्त्युद्भवध्वनेः प्रबन्धव्यञ्जकत्वं कुत्र दर्शितम्?

## २०.५ पदैकदेशादिप्रकाश्यः रसादिः

इतः पूर्वं भवन्तः असंलक्ष्यक्रमव्यङ्ग्यध्वनेः पदव्यञ्जकत्वं वाक्यव्यञ्जकत्वञ्च पठितवन्तः। सम्प्रति तिङन्त-सुबन्तरूपाणां पदानाम् एकदेशेषु नाम प्रकृति-प्रत्यय-उपसर्गरूपांशत्रयेषु रचनायां वर्णादौ प्रबन्धे च रसादयः सम्भवन्ति इति ग्रन्थकारेण उच्यते–

**२०.५.१प्रकृतिप्रकाश्यः**

अधुना धातुरूप-प्रकृत्यात्मकपदैकदेशे सम्भोगशृङ्गाररसस्य स्थलं दर्शयति-

**रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य**
**रुद्रस्य तृतीयनयनं पीर्वतीपरिचुम्बितं जयति।** इति संस्कृतम्।

हालककविकृतायां गाथासप्तशत्यां पञ्चशतके ५५ पद्यमिदम्। सख्याः शिक्षार्थं काऽपि पार्वत्याः लज्जायामपि स्नेहाभिव्यक्तिवैदग्ध्यं वर्णयति। सुरतक्रीडायाम् अपहृतवसनायाः पार्वत्याः करकिसलयाभ्यां शिवस्य नेत्रद्वयं पिहितम्। परन्तु तृतीयं नेत्रं दृष्ट्या पार्वती चुम्बनव्याजेन पार्वती तदपि पिहितवती। तत्र अन्यनेत्रद्वयापेक्षया चुम्बनेन तृतीयनेत्रं सर्वोत्कर्षेण वर्त्तते इति तत्र उत्कृष्टत्वं समतिशयं पार्वत्याः लज्जादि च शृङ्गाररसं परिपोषयति। अत्र जयति इति पदे जि धातुरुपः प्रकृत्यात्मके पदैकदेशे व्यञ्जकत्वम्।

ग्रन्थकारः नामरूपप्रकृत्यात्मकपदैकदेशे सम्भोगशृङ्गाररस्य स्थलमुदाहरति- प्रेयान् ... इत्यादि पद्येन। काव्यालङ्कारसूत्रवृत्तौ पद्यमिदं दृश्यते। एकदा प्रणयापराधहेतोः नायकः निजनायिकायाः निकटे क्षमाप्रार्थनां कृतवान्। तदा शपथपूर्वकं नायिका प्रत्याख्यानं कृतवती। ततः वासभवनात् नायकः द्वित्राणि एव पदानि गतः। तावत् झटित्येव नायिका धावित्वा प्रणतिपूर्वकं नायकं धृतवती। प्रेम्णः गतिः हो विचित्रा। अत्र द्वित्राणि पदानि इति पदेन नायिकायाः उत्कण्ठातिशयः व्यज्यते। अनेन सम्भोगशृङ्गाररसः परिपुष्टः। अयं शृङ्गाररसध्वनिः द्वित्राणि पदानि इति प्रातिपादिकरूप प्रकृत्या ध्वन्यते।

**२०.५.२ प्रत्ययप्रकाश्यः**

प्रत्ययरूपपदैकदेशयोः तिङ्सुपः सम्भोगशृङ्गारस्य व्यङ्ग्यस्थलम् उदाहरति पथि पथि ... इत्यादि पद्येन। अस्मिन् पद्ये वसन्तवर्णनं कृतमस्ति। प्रतिमार्गं नवाङ्कुराणां कान्तिः शुकचञ्चुनामिव मनोहरा अस्ति। प्रतिदिशं लतानां नर्त्तकः पवनः वहति। कन्दर्पः प्रतिपुरुषं झटिति पञ्चबाणान् क्षिपति। प्रतिनगरं मानिनीनां मानचर्च्या निवृत्ता अस्ति।

अस्मिन् पद्ये किरति इति स्थले किरणस्य साध्यमानत्वम् अस्ति। माननिवृत्तहेतुभूतायाः बाणविकिरणक्रियायाः साध्यमानत्वं किरति क्रियाद्वारा द्योत्यते। माननिवृत्तेः सिद्धत्वं निवृत्ता इति सुप् प्रत्ययद्वारा द्योत्यते। किरति इति तिङ्प्रत्ययेन निवृत्ता इति सुप्प्रत्ययेन च वसन्तकालस्य उद्दीपकत्वं व्यज्यते।

मम्मटः तिङ्सुविभक्तिद्वारा व्यञ्जितस्य विप्रलम्भशृङ्गाररसस्य एकमुदाहरणं ददाति लिखन्नास्ते भूमिं ... इत्यादि पद्येन। इदं पद्यम् अमरुशतके अस्ति। बहुदिनव्यापी मानवतीं प्रतिसख्याः उक्तिः वर्णिता। हे निर्दये! तव प्राणप्रियः गृहात् बहिः भूमिं लिखन् उपविष्टः अस्ति। सर्वाः सख्यः निरन्तरं रोदनेन निराहाराः सन्ति। पञ्जरशुकैः सर्वं हसितं पठितञ्च त्यक्तम्। तव अवस्था च असह्यपीडाजनिका जाता। अतः अधुना मानं विसृज इति काव्यार्थः। अत्र लिखन् इति शतृप्रत्ययेन यावत् उपवेशनकालिकत्वं लिखनस्य व्यज्यते। आस्ते इति तिङन्त प्रयोगद्वारा उपवेशनक्रियायाः प्रधान्यम् आसीत् इति अतीतप्रयोगः न दृश्यते। प्रसादरूपकफलपर्यन्तमेव तस्य उपवेशनम्। पुनः भूमिम् इति स्थले सुबन्तप्रत्ययेन भूमिं लिखति इति कथनात् लिखने तस्य मनः नास्ति। तस्मात् नायिकायाः अभिमानेन नायकस्य अभिमानेन नायकस्य मानसिकं दुःखम् आस्ते इति प्रत्ययद्वारा, भमिम् इति सुप्प्रत्ययद्वारा, लिखन् इति च शतृप्रत्ययद्वारा व्यज्यते। तस्मात् विप्रलम्भशृङ्गाररसध्वनिः आस्वाद्यते। तस्मात् वृत्तौ ग्रन्थकारः उल्लिखति यत् तिङ्सुप्विभक्तिनां व्यङ्ग्यम् इति।

### २०.५.३सम्बन्धादिप्रकाश्यः

षष्ठीविभक्तिरूपप्रत्ययात्मकस्य सम्बन्धपदस्य पदैकदेशे शृङ्गाररसव्यञ्जकत्वं यथा–

**ग्रामरुहास्मि ग्रामे वसामि नगरस्थितं न जानामि।**
**नागरिकाणां पतीन् हरामि या भवामि सा भवामि।।** इति संस्कृतम्।

काञ्चित् नागरिकां प्रति कलहप्रसङ्गे ग्रामीणायाः उक्तिः अत्र वर्णिता। हे ग्रामरुहा अर्थात् कामे जाता अस्मि, ग्रामे वसामि; अतः नगरमर्यादां न जानामि। किन्तु नागरिकाणां पतीन् वशीकरोमि इति काव्यार्थः। अत्र नागरिकाणाम् इत्यानादरे षष्ठी। अत्र नागरिकान् इति अपहाय नागरिकाणां पतीन् हरामि इति उक्तम्। नगरे विद्यमानाः स्त्रिजनाः ग्रामिणानामपेक्षया अतिचतुराः। किन्तु अत्र ग्रामीणा वदति यत् नगरे विद्यमानानाम् स्त्रीणां पतीन् हरामि इति। तेन च सम्बन्धषष्ठ्या तत्सम्बन्धेन पतीषु चातुर्यातिशयो द्योत्यते। तेन च तस्मादपि स्वस्य अतिचातुर्यं व्यङ्ग्यम्। अनादरषष्ठीपक्षे तु ताः पश्यन्तीः अनादृत्यः इति व्यङ्ग्यम्।

कालस्य रौद्ररसव्यञ्जकत्वं यथा– रमणीयः क्षत्रियकुमार आसीत् इति। वीररचितनाटके द्वितीयेऽङ्के शिवधनुभञ्जकं रामं प्रति परशुरामवाक्यमिदम्। अत्र आसीदिति अतीतकालप्रयोगसूचकलङ्लकारेण क्षत्रियकुमारस्य रमणीयत्वम् अतीतं न तु वर्त्तमानं भविष्यद्वा इति व्यज्यते। तेन च क्षणात्, एनं संहरामि इति प्रतीत्या क्रोधातिशयः व्यङ्ग्यः।

प्रत्ययरूपवचनविशेषस्य विप्रलम्भशृङ्गाररसव्यञ्जकत्वं यथा–

**तेषां गुणग्रहाणानां तासामुत्कण्ठानां तस्य प्रेम्णः।**
**तासां भणितीनां सुन्दर! ईदृशं जातमवसानम्।।** इति संस्कृतम्।

पूर्वं बहुतरगुणश्रवणेन नायिकां प्रति आसक्तो भूत्वाऽपि अनन्तरम् अन्यां काञ्चित् प्रति आसक्तं नायकं प्रति प्रथमायाः नायिकायाः उक्तिः– हे सुन्दर! तेषां मम गुणवर्णनानां मम प्राप्त्यर्थं जातानाम् उत्कण्ठानां मम सन्निधौ त्वमेव जीवितसर्वस्वम् इत्यादीनां वचनानां तत्कर्त्तुकगुणग्रहणादिजन्यस्य प्रेम्णः एवंवाधरीत्या अपराधकलुषितम् अवसानं जातम् इति काव्यर्थः। अत्र गुणग्रहणानाम्, उत्कण्ठानां, भणितीनां च बहुवचनप्रयोगद्वारा तेषाम् आधिक्यं द्योत्यते। प्रेम्णः इति एकवचनप्रयोगद्वारा अनाविलत्वम्, अकपटत्वम, तथा नायिकानायकयोः एकचित्तवृत्तित्वं द्योत्यते। तेन विप्रलम्भशृङ्गाररसः ध्वन्यते।

पुरुषव्यत्ययस्य शान्तरसव्यञ्जकत्वं यथा– रे रे चञ्चललोचना ... इत्यादि। अत्र कश्चिद् विरक्तः जनः सुन्दरीदर्शनेन क्षुभितं स्वचित्तं प्रति उपहसति। रे रे मनः, चञ्चललोचनां कामिनीं प्रति तव आसक्तिः नैव उचिता। स्थिरप्रेमाणं महिमानं भगवन्तं विहाय हरिणाक्षीम् आलोक्य कस्मात् नृत्यसि? किं त्वं तां हरिणाक्षीं विहरिष्यसे इति विचारयसि? इमाम् आशां मुञ्चय। कारणम् इदं संसारसागरे मज्जनाय कण्ठतटे शिलासदृशी वर्त्तते।

अत्र उपहासद्वारा पुरुषपरिवर्त्तनं कृतमस्ति। त्वमिति युष्मदि उपपदे सती मन्यसे इति प्रयोगः उचितः, किन्तु मन्ये इति उत्तमपुरुषप्रयोगः कृतः। अहम् इति अस्मदुपपदे सती विहरिष्ये इति प्रयोगः साधुः स्यात्। किन्तु विहरिष्यसे इति मध्यमपुरुषः प्रयोगः कृतः। एवं मध्यम-उत्तमयोः विपर्ययः उपहासम् अभिव्यनक्ति। तेन च शान्तरसस्य परिपोषः जायते।

पूर्वनिपातस्य भावव्यञ्जकत्वं यथा– येषां दोर्बलमेव ... इत्यादिपद्यम्। अत्र कश्चित् चाटुकारः राजानं स्तौति। येषां राज्ञां दोर्बलं नाम बाहुबलमेव अस्ति, ते नीतिज्ञानां मते दुर्बलाः। किञ्च येषां राज्ञां केवलं नीतिरीतिप्रभृतयः भवन्ति, बलं न भवति; ते वा किं कुर्युः। के तर्हि समीचीनाः इति जिज्ञासायाम् आह यत् ये राजानः पराक्रमनययोः स्वीकारणे युद्धयात्रादि कुर्वन्ति तादृशाः विरलाः। यदि वा स्युः भुवनत्रयेऽपि द्वित्राः। तथापि भवादृशाः पवित्राः न वा इति सन्देहः। अत्र पराक्रमनययोः इति पूर्वनिपातः। राजा अत्यन्तपराक्रमशालीति ध्वन्यते। चाटुकारस्य राजाविषयक रतिभावः प्रधानम्।

उपपदविभक्तिविशेषस्य भावस्य व्यञ्जकत्वं यथा– प्रधनाध्वनि ... इत्यादिपद्यम्। अत्र कश्चित् चाटुकारः राजानं वदति– हे नुप! भवतः शत्रवः गम्भीरध नुशब्दयुक्ते युद्धक्षेत्रे दिवसम् अभिव्याप्य युद्धं कृतवन्तः। परन्तु भवान् तस्मिन् युद्धक्षेत्रे दिवसेन युद्धं कृतवान्। तेन च विधिसिद्धस्य साधुवादस्य स्थानं प्राप्तवान्। अर्थात् भवान् अल्पकालं युद्धं कृत्वाऽपि विजयं प्राप्तवान् इति काव्यार्थः। अत्र विधुरैः दिवसम् अयोधि इत्यतः दिवसशब्दस्य कालाध्वनोः अत्यन्तसंयोगे द्वितीया विभक्तिः। किन्तु राज्ञः कृते दिवसेन भवान् अयुद्धं इत्यत्र दिवसेन इति अपवर्गे तृतीयाविभक्तिः विहिता। अपवर्गस्तु फलप्राप्तिरेव। अतः राजा युद्धे विजयी इति निश्चयेन तृतीयाविभक्तिद्वारा व्यज्यते। अत्रापि चाटुकारस्य राजविषयकरतिभावः प्रधानम्।

करूपतद्धितप्रत्ययेन विप्रलम्भशृङ्गारध्वनिस्थलं यथा– भूयो भूयोः ... इत्यादिपद्यम्। मालतीमाधवप्रकरणात् पद्यमिदम् आनीतम्। अत्र माधवं दृष्ट्वा मालत्याः अवस्था वर्णिता। वासगृहस्य वल्लभीप्रदेशे विद्यमाने उन्नते वातायने स्थिता मालती रतितुल्या वर्त्तते। सा नगरमार्गेण इतस्ततः गच्छन्तं नायकं माधवं साक्षात् मदनमिव प्रत्यक्षं दृष्टवती। तेन च पुनरवलोकनेन माधवं प्रति तस्याः दृढा उत्कण्ठा जाता। तया अतीक्ष्णैः अङ्गकैः पीडा अनुभूता इति काव्यार्थः। अत्र अङ्गकैः इत्यत्र अङ्गपदात् स्वार्थेत्कप्रत्ययः विहितः। अनेन तद्धितप्रत्ययेन अभिलाषमूलकविप्रलम्भशृङ्गाररसः परिपुष्टः। मालत्याः अङ्गेषु अनिर्वचनीया शोचयियावस्था द्योत्यते। फलतः मालत्याः सौकुमार्यातिशयेषु अङ्गकेषु अनुकम्पावृत्तिः प्रतीयते। अत्र अनुकम्पावृत्ते करूपतद्धितस्य विप्रलम्भशृङ्गाररसव्यञ्जकत्वमस्ति।

उपसर्गेण विप्रलम्भशृङ्गारध्वनिस्थलं यथा– परिच्छेदातीतः ... इत्यादिपद्यम्। इदं पद्यमपि मालतीमाधवात् स्वीकृतम्। अत्र मकरन्दं प्रति माधवस्य स्वावस्थानकथनं वर्णितम्। मालतीं विना शरीरे कश्चित् अनिर्वचनीयः विकारः ममान्तकरणः जडयति, विरहसन्तापञ्च कुरुते। अयं विकारः सकलानां वाचकलाक्षणिकव्यञ्जकानां वचनानाम् अगोचरः। परिच्छेदातीतः अर्थात् इयत्ता विरामो वा तम् अतिक्रान्तः। अस्मिन् जन्मनि न अनुभवविषयः अस्य विकारस्य प्रादुर्भावात् मम विवेकः ध्वस्तः। महामोहरूपकः गहनः अन्धकारः दृश्यते इति।

अत्र प्रध्वंसात् इति प्र उपसर्गः व्यवहृतः। अनेन विवेकस्य समूलोन्मूलनरूपः ध्वंसप्रकर्षः द्योत्यते। अनेन महामोहप्रकर्षयुक्तस्य माधवस्य मालतीविषयकः अभिलाषातिशयः व्यज्यते। अत्र प्र उपसर्गः विप्रलम्भशृङ्गाररसव्यञ्जकः।

पदान्तरयुक्तनिपातेन व्यक्तं ध्वनिकाव्यं यथा– कृतञ्च गर्वाभिमुखं ... इति पद्यम्। अत्र कश्चित् चाटुकारः अथवा मन्त्री राजानं वदति– हे राजन्! त्वया निजं मनः गर्वाभिमुखं कृते सति सर्वे शत्रवः युद्धे निहिताः। किमन्यदेव वक्तव्यम्। आकाशे तावत् पर्यन्तम् अन्धकारः तिष्ठति। यावत् पर्यन्तं सूर्यः उदयाचलशीर्षं नारोहति। अर्थात् यथा सूर्य उदिते अन्धकारः दूरीभूतः भवति। तथैव त्वयि गर्वाभिमुखे कृते शत्रवः निहिताः।

अत्र कृतञ्च निहिताश्च इति चकारद्वयस्य प्रयोगः। मनसः गर्वाभिमुखं शत्रूणां निधनञ्च तुल्यत्वात् तुल्ययोगितालङ्कारः चकारनिपातेन व्यज्यते। राज्ञः पराक्रमातिशयः व्यङ्ग्यविषयः। तथा राजविषयकः रतिभावोऽपि व्यङ्ग्यः अत्र।

बहुविधपदैकदेशनिमित्तात् व्यक्तेन दैन्यभावेन युक्तं ध्वनिकाव्यं यथा– रामोऽसौ भुवनेषु ... इत्यादिपद्यम्। राघवानन्दनाटके विभीषणः रावणं वदति–असौ रामः सकलभुवनजनमनोरमणः अस्ति। असौ खरदूषणादि निहन्तृत्वेन अति प्रसिद्धः, विलक्षणधैर्य-गम्भीर्यादिशाली च भावनया प्रत्यक्षायमाणश्च निजपराक्रमगुणैः असौ त्रिभुवने प्रसिद्धः। तस्य यशः अद्यापि स्तुतिपाठक इव मरुत् सप्तभिः स्वरैः गायति। (रामचन्द्रः एकेन बाणेन श्रेणीभूत सप्ततालवृक्षान् युगपत् भेदं कृतवान्। तेषु विवरेषु प्रवहमानः पवनः रामस्य गुणमानं करोति इति कवेः उत्प्रेक्षा)। यदि भवान् तादृशं रामं न जानाति, तर्हि अस्माकं भाग्यविपर्ययः इत्येव जानातु इति।

अत्र असौ भुवनेषु, गुणैः, इत्यादिषु सर्वनाम-प्रातिपदिक-बहुवचनानां प्रयोगः कृतः। अनेन रामस्य अतिशयप्रसिद्धिः द्योत्यते। अस्मद्भाग्यविपर्ययात् इत्यत्र न त्वद्भाग्यविपर्ययः न वा मद्भाग्यविपर्ययः अपितु समस्तराक्षसकूलविपर्ययः इति द्योत्यते। अत्रापि विभीषणस्य दैत्यं ध्वन्यते।

बहुविधपदैकदेशविशेषैः व्यक्तरतिभावेन युक्तं ध्वनिकाव्यं यथा– तरुणिमनि कलयति ... इत्यादिपद्यम्। अत्र कस्याश्चित् नायिकायाः रूपवर्णना विधीयते। इयं चकितस्य हरिणस्य चञ्चले नयने धारयति। सकलललनानां शिरोभूता इयम्। अस्याः नायिकायाः तारुण्येन भ्रूयुगलं कन्दर्पधनुनिकटे कलाम् अधीते इति। अस्मिन् पद्ये तरुणिमनि इति स्थले तरुणशब्दात् इमनिच् प्रत्ययः विहितः। अनुमदनधनुः इति स्थले अव्ययीभावसमासः कृतः। मौलौ वसति इति न कृत्वा मौलिमधिवसति इति अधिकरणकारकस्थाने कर्मकारकत्वं प्रदर्शितम्। फलतः इमनिच् प्रत्ययादिद्वारा नायिकायाः सौन्दर्यातिशयः व्यज्यते।

काव्यप्रकाशकारः व्यञ्जकमुखेन ध्वनिभेदगणनावसरे एवमेव अन्येषां काल कारक- संख्यादीनां पदैकदेशरूपव्यञ्जकत्वं बोद्धव्यम् इति सूचयति। वर्णानां रचनानाञ्च रसव्यञ्जकत्वम् अष्टमोल्लासे गुणस्वरूपनिरूपणावसरे उदाहरिष्यति। पूर्वं पदैकदेशरचनावर्णेष्वपि रसादयः इति उक्तम्। तत्र अपिशब्दात् प्रबन्धेषु नाटकादिषु च रसव्यञ्जकत्वं ज्ञातव्यम्। एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः भवन्ति। अर्थात् वाक्य-पद-पदैकदेश-रचना-वर्ण-प्रबन्धप्रकाशतया रसादीनाम् अलक्षक्रमाणां षड्भेदाः भवन्ति इत्यर्थः।

भेदास्तदेकपञ्चाशत्–

काव्यप्रकाशकारः सुखावबोधार्थं ध्वनेः शुद्धभेदान् एकपञ्चाशत् इति गणयति। यथा अविवक्षितवाच्यध्वनेः अर्थान्तरसंक्रमितम् अत्यन्ततिरस्कृतञ्चेति भेदद्वयम्। एतत् भेदद्वयं पुनः पदगतवाक्यगताभ्यां चतुः प्रकारकम्। विवक्षितान्यपरवाच्यध्वनेः संलक्षक्रमव्यङ्ग्यस्य पद-वाक्य-पदैकदेश-रचना-वर्ण-प्रबन्धभेदैः षड्भेदाः। संलक्षक्रमव्यङ्ग्यस्य शब्दशक्तिमूलव्यङ्ग्यत्वे वस्त्वलङ्काररूपौ द्वौ भेदौ। एतयोः पुनः पदगतवाक्यगतत्वेन चत्वारः भेदाः। अर्थशक्तिमूलध्वनेः द्वादशभेदाः। एतेषां पद-वाक्य-प्रबन्ध-गतत्वेन षट्त्रिंशत् भेदाः। शब्दार्थोभयशक्तिमूलश्च एक एव भेदः। तस्मात् ४+६+४+३६+१=५१ इति ध्वनेः शुद्धभेदाः ज्ञातव्याः।

---

**मूलग्रन्थः**

**पदैकदेशरचनावर्णेष्वपि रसादयः॥ (सूत्र-६१)**

तत्र प्रकृत्या यथा–

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स।
रुद्दस्स तइअणअमं पव्वईपरिचुंविअं जइअ॥

अथ जयतीति नतु शोभते, इत्यादि। समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम्। यथा वा–

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्सुन्मनाः।
तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो।
धावित्वेव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥

अत्र पदानीति न तु द्वाराणीति। तिङसुपोर्यथा

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुद्धां लासकश्च।
नरि नरि किरति द्राक्सायकान् पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनी मानचर्चा॥

अत्र किरतीति किरणस्य साध्यमानत्वम्। निवृत्तेति निवर्त्तनस्य सिद्धत्वं तिङा सुपा च तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते। यथा वा–

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः
निराहाराः सख्यः सततरुदितोच्छूननयनाः।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैः
तवावस्था चेयं विसृज कठिने मानमधुना॥

अत्र लिखन्निति न तु लिखतीति तथा, आस्ते इति न तु आसित इति, अपि तु प्रसादपर्यन्तमास्ते, इति, भूमिमिति न तु भूमाविति न हि बुद्धिपूर्वकमपरं किंचिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम्। सम्बन्धस्य यथा–

गामारुहम्मि गामे वसामि णअरठ्ठिइं ण जाणामि।
णाअरिआणं पइणो हरेमि जा होमि सा होमि॥

अत्र नागरिकाणामिति षष्ठ्याः।

रमणीयः क्षत्रियकुमार आसीत् इति कालस्य एषा हि भग्नमहेश्वर-कार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः।

वचनस्य यथा–

ताणँ गुणग्गहणाणं ताणुक्कंठाणं तस्स पेम्मस्स।
ताणँ भणिआणं सुंदर एरिसिअँ जाअमवसाणम्॥

अत्र गुणग्रहणादीनां बहुत्वम् प्रेम्णश्चैकत्वं द्योत्यते। पुरुषव्यत्ययस्य यथा–

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमाम्
एषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ॥

अत्र प्रहासः।

पूर्वनिपातस्य यथा–

येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः।

ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम्॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते।

विभक्तिविशेषस्य यथा–

प्रधाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम्।
दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपरम्॥

अत्र दिवसेनेत्यपवर्गतृतीया फलप्राप्तिं द्योतयति।

भूयो भूयोः सविघनगरीरश्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गम् वातायनस्था।
साक्षात्कामं नवमिव रतिर्मालती माधवं यत्
गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति॥

अत्रानुकम्पावृत्तेः करूपतद्धितस्य।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते॥

अत्र प्रशब्दस्योपसर्गस्य।

कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः।
तमांसि तिष्ठन्ति हि तावदंशुमान् न यावदायात्युदयाद्रिमौलिताम्॥

अत्र तुल्ययोगिताद्योतकस्य च इति निपातस्य।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवराद्गीर्णैः स्वरैः सप्तभिः॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां न त्वदिति न मदिति, अपि अस्मदित्यस्य सर्वाक्षेपिणः, भाग्यविपर्ययादित्यन्यथासंपत्तिमुखेन न त्वभावमुखेनाभिधानस्य।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना॥

अत्र इमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य तरुणत्वे इति धनुषः समीप इति मौलौ वसतीति त्वादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित्स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति।

**एवमन्येषामपि बोद्धव्यम्।**

**वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपणे उदाहरिष्यते। अपिशब्दात् प्रबन्धेषु नाटकादिषु। एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः।**

**भेदास्तदेकपञ्चाशत्** (सूत्र-६२)

**व्याख्याताः।**

---

**बोधप्रश्नः**

१. रसादिः पदैकदेशादिप्रकाश्यः इति कथनेन किं ज्ञायते ?

## २०.६ ध्वनेः सङ्कीर्णभेदाः

मम्मटः व्यञ्जकमुखेन ध्वनिभेदगणनावसरे एकपञ्चाशत् शुद्धभेदान् प्रतिपादितवान्। तेषां पुनः सङ्कीर्णभेदान् गणयितुम् उपक्रमते।

### २०.६.१सङ्करन्यायेन

ध्वनिभेदानां परस्परं नीरक्षीरवत् मिश्रणेन सङ्करः इति व्यवहारः। अयं संकरः त्रिविधः। यथा– अङ्गाङ्गीभावसंकरः, सन्देहसंकरः, एकपदानुप्रवेशसंकरश्चेति। ध्वनेः केवलं शुद्धाः एकपञ्चाशद्भेदाः न भवन्ति, अपि तु तेषां भेदानां त्रिरूपेण संकरेण एकरूपया च संसृष्ट्या परस्परगुणने सति **१०४०४** इति संख्या जायते। अर्थात् एकपञ्चाशद्ध्वनिभेदानाम् अन्योऽन्ययोजनेन **५१x५१=२६०१** भेदाः भवन्ति। एतेषां पुनः त्रिरूपेण संकरेण एकरूपया संसृष्ट्या च **(३+१=४)** गुणने **२६०१x४=१०४०४** इति संख्या जायते। इयं संख्या मम्मटेन वेदखाब्धिवियच्चन्द्राः इति सूच्यते। अङ्कानां वामतो गतिः इति न्यायेन वेदाः=४, ख (आकाशः)=०, अब्धिः (समुद्रः)=४, वियत् (आकाशः)=०, चन्द्रः=१ इति वामतः लेखनेन **१०४०४** ध्वनेः संकीर्णभेदाः। एकपञ्चाशद्भेदैः सह मेलनेन **१०४०४+५१=१०४५५** इति ध्वनिभेदाः जायन्ते। इयं संख्या मम्मटेन-शरेषु युगखेन्दवः इति सूच्यते। (शरः=५; इषु=५; युगाः=४; ख=०; इन्दुः=१)। तत्र दिङ्मात्रं ध्वनिकाव्यस्य संकरस्थलमुदाहरति-खणपाहुणिआ ... इत्यादिपद्येन।

**क्षणप्राघुणिका देवरजायया सुभग किमपि ते भणिता।**
**रोदिति गृहपश्चाद्भागवलभीगृहेऽनुनीयतां वराकी।।** इति संस्कृतम्

अत्र देवरं प्रति भ्रातृजाया वदति- हे सुन्दर! उत्सवावसरे अतिथिरूपेण समागतां तव प्रेमिकां प्रति तव पत्न्या किमपि कटुवचनमुक्तम्। अतः सा गृहस्य पश्चाद्भागे उपरितनगृहे शून्यस्थाने रोदिति। सा वराकी त्वया अनुनीयताम् इति।

अत्र अनुनयः रोदननिवर्त्तको व्यापारः। तेन सम्भोगो व्यङ्ग्यः। गृहपश्चाद्भागे विजनता व्यज्यते। अतः अनुनीयताम् इति पदेन रोदननिवर्त्तकव्यापारः लक्षणया अर्थान्तरसंक्रमितः सन् सम्भोगरूपमर्थं बोधयति। अतः अर्थान्तरसंक्रमितवाच्यध्वनिरस्ति। किञ्च अनुनयव्यापारेण वस्तुना तस्याः उपभोगं कुरु इति वस्तु व्यज्यते। अतः अर्थशक्तिमूलवस्तुना वस्तुध्वनिरपि अस्ति। तस्मादत्र अविवक्षितवाच्यध्वनिः-विवक्षितान्यपरवाच्यध्वन्योरपि सन्देहसंकरस्थलं भवति।

### २०.६.२संसृष्टिन्यायेन

ध्वनिभेदद्वयस्य तिलतण्डुलवत् परस्परनिरपेक्षरूपेण स्थितेः। संसृष्टिरिति

उच्यते। ग्रन्थकारः अनुग्राह्यानुग्राहक-एकव्यञ्जकानुप्रवेशरूपयोः संकरयोः संसृष्टोश्च एकमुदाहरणम् आह- स्निग्धश्यामलकान्ति ... इत्यादिपद्यम्। अत्र वर्षाकाले सीताविरहिणः रामचन्द्रस्य उक्तिः वर्णिता। अयमाकाशः स्निग्धश्यामलेन मेघेन लिप्तः। तत्र यथैष्टं वकपंक्तयः शोभन्ते। सुशीतलः पवनः वहति। मेघानां सुहृदां मयूराणाम् आनन्देन केकावाणी श्रूयते। एतत्सर्वं यथेष्टमस्तु। अहन्तु सर्वं सहे। किन्तु विदेहराजपुत्री सीता सुकुमारतया कथं जीविष्यति? हे देवि! धीरा भव इति काव्यार्थः।

अत्र लिप्ता इति स्थले अमूर्ते आकाशे द्रवसंयोगस्य असम्भवात् मुख्यार्थबाधया अत्यन्ततिरस्कृतपूर्वकं लक्षणया व्यापनत्वम् इत्यर्थः। एवमेव अचेतने मेघे चित्तवृत्तिविशेषस्य सहृदयस्य असम्भवात् केकाद्यनुबन्धित्वं प्रकाशयति। अत्र लक्षार्थयोः अतिशये व्यङ्ग्ये तयोश्च परस्परं निरपेक्षतया अवस्थानात् संसृष्टिः।

रामोऽस्मि इति स्थले रामशब्दः अर्थान्तरे संक्रमितः सन् सकलदुःखसहनक्षमः इति अर्थं प्रकाशयति। अतः अत्र अर्थान्तरसंक्रमितवाच्यध्वनिः। अत्र अर्थान्तरसंक्रमितात्यन्त-तिरस्कृतवाच्ययोः अनुग्राहकरूपसंकरः विद्यते।

किञ्च रामोऽस्मि इति पदे अर्थान्तरसंक्रमितवाच्यध्वनिना सह रामगतः विप्रलम्भशृङ्गाररसः ध्वन्यते इति एकव्यञ्जकानुप्रवेशसंकरोऽपि अस्ति। एवं रूपेण ध्वनेः अन्येऽपि भेदाः ज्ञातव्याः।

---

**मूलग्रन्थः**

**तेषां चान्योऽन्ययोजने। (सूत्र-६३)**

**सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।**

**न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वप्रभेदैरेक-पञ्चाशता संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन सङ्करेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने।**

**वेदखाब्धिवियच्चन्द्राः (१०४०४) (सू.-६४)**

**शुद्धभेदैः सह-**

**शरेषु युगखेन्दवः (१०४५५) (सू.-६५)**

**अत्र दिङ्मात्रमुदाह्रियते।**

**खणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिआ।**
**रुअइ पडोहर वलहीघरम्मि अणुणिज्जउ वराई॥**

**अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः किमनुरणनन्याये-नोपभोग, एव व्यङ्ग्ये व्यञ्जकः इति सन्देहः।**

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः।**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥**

**अत्र लिप्येति पयोदसुहृदामिति च, अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। ताभ्यां सह रामोऽस्मीत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः सङ्करः। एवमन्यदप्युदाहार्यम्।**

---

**बोधप्रश्नः**

१. काव्यप्रकाशकारेण शुद्धसङ्कीर्णभेदेन कति ध्वनिभेदाः गणिताः?

## २०.७ सारांशः

इत्थं भवन्तः व्यञ्जकमुखेन ध्वनिभेदान् पठितवन्तः। ध्वनेः एकपञ्चाशद्भेदान् ज्ञातवन्तः। शब्दार्थोभयशक्तिमूलः ध्वनिः वाक्ये एव भवति इति भवद्भिः ज्ञातम्। ध्वनेः पदव्यञ्जकत्वं, वाक्यव्यञ्जकत्वं, प्रबन्धव्यञ्जकत्वं, प्रकृतिव्यञ्जकत्वं, सम्बन्धपदव्यञ्जकत्वं, उपसर्गादिव्यञ्जकत्वञ्च भवद्भिः पठितम्। ध्वनेः सङ्कीर्णभेदानां संख्या काव्यप्रकाशमतानुसारं गणिता।

त्रिरूपेण सङ्करेण, एकरूपया संसृष्ट्या च परस्परयोजनेन ध्वनेः संख्या पञ्चपञ्चाशदुत्तरचतुःशतदशसहस्रम् (१०४५५) इति ज्ञायते। एवमेव ध्वनिभेदान् ज्ञात्वा उत्तमकाव्यरचनायै कवयः प्रवृत्ताः स्युः इति काव्यप्रकाशकारस्याभिप्रायः अभ्युपगतः।

## २०.८ शब्दावली

१. द्व्युत्थः – द्वाभ्याम् उत्तिष्ठति इति द्व्युत्थः। शब्दशक्तिमूलः अर्थशक्तिमूलश्च इति द्विविधः।

२. अनुकम्प्यः – अनुकम्पयितुं योग्यः।

३. लावण्यम् – मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति-यदङ्गेषु तल्लावण्यमुदाहृतम्।।इति।।

४. समुन्मिषन्ति – पुनः पुनः उत्पद्यन्ते।

५. व्यतिकरः – पौर्वापर्यविपर्ययः।

६. हेत्वलङ्कारः – काव्यलिङ्गालङ्कारः।

७. अनवरतम् – निरन्तरम्।

८. धम्मिल्लः – केशपाशः।

९. स्कन्धः – सेनानिवेशः।

१०. व्यतिरेक – उपमानापेक्षया उपमेयस्य उत्कर्षरूपः व्यतिरेकालङ्कारः।

११. अर्थशक्तिभूः – अर्थशक्तिमूलद्वादशविधः ध्वनिः।

१२. प्रबन्धः – संघटितनानावाक्यसमुदायः।

१३. विजृम्भमाणस्य – प्रगल्भस्य।

१४. अवगम्यते – द्योत्यते।

१५. रचना – संघटना।

१६. क्षणः – उत्सवः।

१७. प्राघुणिकः – अतिथिः।

## २०.९ सन्दर्भग्रन्थः

१. ध्वन्यालोकः

२. काव्यप्रकाशः

३. साहित्यदर्पणः

४. ध्वन्यालोके काव्यसम्पदः

५. संस्कृतकाव्यतत्त्वविचारः

## २०.१०सहायकग्रन्थः

१. काव्यप्रकाशः (झल्कीकरवामनः, भण्डारकर ओरिएण्टल इन्स्टिच्युट्, पुणे, १९५०

२. संस्कृतहिन्दीकोश-वामनशिवराम आप्टे, दिल्ली, २००६

३. ध्वन्यालोककाव्यसम्पदः-सत्यनारायण आचार्यः, पुरी, १९९२

## २०.११ बोधप्रश्नोत्तराणि

१. अविवक्षितवाच्यध्वनेः भेदद्वयम्-अर्थान्तरसंक्रमितवाच्यः, अत्यन्ततिरस्कृतश्चेति। असंलक्ष्यक्रमव्यङ्ग्यः रसादिः ध्वनिः एक एव। संलक्ष्यक्रमेषु वस्त्वलङ्कार-भेदेन शब्दशक्तिमूलध्वनिः द्विविधः। अर्थशक्तिमूलः द्वादशविधः। (२+१+२+१२=१७) एतेषां सप्तदशानां वाक्यपदमूलकत्वेन द्वैविध्ये (१७x२=३४) चतुस्त्रिंशद्भेदाः। तत्र उभयशक्तिमूलश्च एक इति आहत्य ध्वनेः पञ्चत्रिंशद्भेदाः भवन्ति।

२. अर्थशक्त्युद्भवध्वनिः न केवलं पदवाक्ययोः प्रकाशते, अपि तु प्रबन्धे भवति। प्रबन्धः नाम संघटितनानावाक्यसमुदायरूपः। तत्र महाकाव्यखण्डकाव्यादिभेदाः प्रबन्धस्य भवन्ति। अयं प्रबन्धः अर्थशक्त्युद्भवध्वनेः व्यञ्जकः अस्ति। काव्यप्रकाशे अर्थशक्त्युद्भवध्वनेः प्रबन्धव्यञ्जकत्वं महाभारतस्य गृध्रगोमायुसंवादादौ दर्शितम्।

३. रस्यते आस्वाद्यते इति रस इति व्युत्पत्त्या रसादिः इत्यत्र आदिपदेन भावादयः गृह्यन्ते। रसादिः इति कथनेन रस-भावादयः असंलक्ष्यक्रमव्यङ्ग्यध्वनिरूपेण परिचिताः। रसादिः पदैकदेशादिप्रकाश्य इति कथनेन रसादीनां पदैकदेशादिव्यञ्जकत्वमस्ति। अत्र आदिपदेन रचना-वर्ण-प्रबन्धादयश्च रसादेः व्यञ्जकाः भवन्ति। तदुक्तं पदैकदेशरचना वर्णेष्वपि रसादयः इति।

४. काव्यप्रकाशकारेण ध्वनेः शुद्धभेदान् संकीर्णभेदांश्च आहत्य १०४५५ इति भेदाः गणिताः। इयं संख्या शरेषु युगखेन्दवः इति ग्रन्थकारेण उल्लिखिता।

## २०.१२अभ्यासप्रश्नाः

१. काव्यविशेषस्य ध्वनेः पदप्रकाशता कथं सम्भवति ?

२. मम्मटानुसारं शुद्धध्वनिभेदसंख्या का ?

३. अर्थशक्तिमूलध्वनेः द्वादशभेदानां पदप्रकाशतां निरूपयत।

४. 'प्रबन्धेऽप्यर्थशक्तिभूः' इति कथनस्य तात्पर्यं सोदाहरणं लिखत।

५. 'पदैकदेशरचना वर्णेष्वपि रसादयः' इति काव्यप्रकाशसूत्रं सोदाहरणं स्पष्टीकुरुत।

६. 'भेदास्तदेकपञ्चाशत्' इति विशदयत।

७. सङ्करन्यायेन संसृष्टिन्यायेन च मम्मटानुसारं ध्वनिभेदान् गणयत।

—•—

## स्वप्नः

संस्कृते पारम्परिक-आधुनिकज्ञानवैदुष्यस्य समन्वयनदृशा संस्कृतशिक्षायाः वैश्विकपरिप्रेक्ष्यस्य उपस्थानम्।

## सङ्कल्पः

- संस्कृतनिष्ठज्ञानसरण्याः उत्तमावबोधस्य सर्जनम्।
- संस्कृतशिक्षान्तर्गतानाम् अभिनवविषयाणां संवर्धनम्।
- आधुनिकसमाजोत्कर्षाय सम्भावनानां प्रकाशनदृष्ट्या संस्कृतभाषायाः तत्साहित्यस्य च प्रासङ्गिकतायाः आविष्करणम्।